नीलेन सहितः प्रायान्नागराजेन धीमता ।
तौ गत्वा ब्रह्मसदनं ब्रह्माणं [1]कमलासनम् ॥ १९० ॥
[2]ब्रह्मघोषकृतोत्साहौ ववन्दतुररिन्दम ।
देवं[3] कमलयोनिं तं [4]संगत्यासनमास्थितौ ॥ १९१ ॥
[5]वासुदेवं तथेशानमनन्तं च जगत्पतिम् ।
तदा तत्रागतान्दृष्ट्वा परमां प्रीतिमाश्रितौ ॥ १९२ ॥
[6]कृत्वा सभाजनं तेषां प्रीत्या दृष्टौ च तौ पुनः ।
सम्यग् समुपविष्टौ च तीर्थयात्राप्रसंगतः ॥ १९३ ॥
तैश्चापि पूजितौ तत्र जलोद्भवविचेष्टितम् ।
कथयामासतुरुभौ ततो देवः पितामहः ॥ १९४ ॥
[7]उवाचैनौ तथा नागं [8]ऋषिं चामितविक्रमम् ।
नौबन्धनं प्रयास्यामो [9]वयं द्राक्तस्य निग्रहे ॥ १९५ ॥
[10]एष तं केशवः [11]साक्षाद्घातयिष्यत्यसंशयम् ।
एतच्छ्रुत्वा हरिः प्रायात्तार्क्ष्येण परवीरहा ॥ १९६ ॥
तमन्वयाद् वृषारूढः हरो [12]देव्या सहानघ ।
[13]आरुह्य [14]हंसयानं च ब्रह्मा लोकनमस्कृतः ॥ १९७ ॥
[15]ययौ हर्षेण महता पुत्रहार्दवशीकृतः ।
[16]दृष्ट्वा च कश्यपः प्रीतस्तत्र तेषां विचेष्टितम् ॥ १९८ ॥
नीलेन सहितः प्रायान्मेघमारुह्य यत्नतः ।
ततः कोलाहले जाते श्रुत्वैवैतत्पुरन्दरः ॥ १९९ ॥
[17]समाहूय सुरान् सर्वान् कृतोत्साह उवाच ह ।
भो भो सुराः समागत्य सर्वे यूयं पुरस्कृताः ॥ २०० ॥

---

१ कमलोद्भवं D. २ दृष्ट्वा मुनिभिरासीनं D. ३ एवं D. ४ पूर्वम् D. ५ Lines 5—6 not in A; वासुदेवेश्वरौ देवौ D, C. ६ Lines 7, 8 not in D, C. ७ उवाच देवो नाग तं C, D. ८ नीलं चा—D. ९ वयं च B, C, D. १० ततः D, C. ११ देवः D, C. १२ देव्यो मया सह D. १३ हंसयानगतो देवो नागौ तौ मेघवाहनौ D. १४ तं म A. १५ Line 17 not in C. १६ Instead of lines 18–20 D and C have दृष्ट्वा कश्यपः प्रायात् श्रुत्वैतत्तु पुरन्दर. १७ Lines 21—22 (and 1 of the next page) not in D, C.

आगच्छध्वं[1] गमिष्यामो यत्रैते सेश्वरा गताः ।
इति[2] देवगणैः सार्धं यात्यस्मिन्केशवान्तिकम्[3] ॥ २०१ ॥
यमोऽग्निर्वरुणो वायुः कुवेरो नैर्ऋतस्तथा[4] ।
आदित्या वसवो रुद्रा विश्वेदेवा मरुद्गणाः ॥ २०२ ॥
अश्विनौ भृगवः साध्यास्तथैवांगिरसः सुतः ।
ऋषयश्च महाभागा गन्धर्वाप्सरसां गणाः ॥ २०३ ॥
देवपत्न्यस्तथा सर्वा देवानां याश्च मातरः ।
विद्याधरगणा यक्षाः सागराः सरितस्तथा ॥ २०४ ॥
मकरेण ययौ गंगा कूर्मेण यमुनापगा[5] ।
वृषारूढा शतद्रुश्च महिषेण सरस्वती ॥ २०५ ॥
अश्वारूढा विपाशा च गजारूढा त्विरावती ।
सिंहेन चन्द्रभागा च सिन्धुर्व्याघ्रेण पार्थिव ॥ २०६ ॥
देविका गवयारूढा मृगेण सरयू नदी ।
मन्दाकिनी मनुष्येण पयोष्णी[6] चाप्यजेन च ॥ २०७ ॥
नर्मदा च मयूरेण सारंगेण च गोमती ।
गोदावरी च मेषेण तथा हंसेन कम्पना ॥ २०८ ॥
वकेन गण्डकी राजन् कावेरी[7] उष्ट्रगा तथा ।
नक्रेणेक्षुमती पुण्या तथा सीता[8] बलाकया ॥ २०९ ॥
चमरेण च लौहित्या वंक्षुः क्रोडेन सत्वरा ।
ह्लादिनी जीवजीवेन ह्लादिनी कुक्कुटेन तु ॥ २१० ॥
पावन्यपि तुरङ्गेण[9] शोणः सर्पगतस्तथा ।
मेघेन कृष्णवर्णा च भूर्वेणा[10] शशकेन च ॥ २११ ॥
एताश्चान्याश्च या नद्यः प्रययुर्वाहनैः सुखैः ।
अनुजग्मुर्जगन्नाथं[11] सर्वाः हरिदिदृक्षया[12] ॥ २१२ ॥

इति नीलमते नौबन्धनयात्रा ॥

---

१ आगच्छेदं B. २ ततः D, C. ३ आयातो यत्र केशवः D; स यातो--C. ४ नृपतिः C. ५ नदी C. ६ परोष्णी E. ७ काभेरी D, C. ८ सीतापुण्यबलाकया D, C. ९ कुलिंगेन D, C. १० कवोष्णा C. ११ जगन्नाथान् A. १२ शेष A; देश B; हरिं युद्ध विदृक्षया D.

बृहदश्व उवाच ॥

नावबन्धनमथासाद्य स्थित्वा[1] ते सुरसत्तमाः ।
विचारनिरतास्तस्थुः[2] किं कार्यमिति चिन्तया ॥ २१३ ॥
देवानुयात्रानिनदं श्रुत्वा दैत्यः सुदुर्मतिः ।
जले त्ववध्यमात्मानं विदित्वा न बहिर्ययौ[3] ॥ २१४ ॥
अनिर्गतं तं च तदा विज्ञाय मधुसूदनः ।
नौबन्ध एव मुदितो विवेशाथ सुरैः सह ॥ २१५ ॥
[4]तन्मध्यशिखरे रुद्रो दक्षिणे शिखरे हरिः ।
उत्तरे शिखरे ब्रह्मा तेषामनु सुरासुराः ॥ २१६ ॥
एवं तेषु[5] निविष्टेषु शैले देवो जनार्दनः ।
अनन्तमाह धर्मात्मा वधार्थं दानवस्य तु[6] ॥ २१७ ॥
कुरुष्व लांगलेन त्वं विदार्याद्य हिमालयम् ।
इदं सरोवरं दिव्यं निष्तोयं शीघ्रमेव तु ॥ २१८ ॥

इति नीलमतेऽनन्तानुशासनम् ।

बृहदश्व उवाच ।

ततस्त्वनन्तो गिरिसंनिकाशः [7]समस्तचन्द्रेण समानकान्तिः ।
व्यवर्धतावृत्य महीं दिवं च संत्रासयन्दैत्यगणान्[8]समन्तात् ॥२१९॥
नीलाम्बरः काञ्चनबद्धमौलिः संपूज्यमानस्त्रिदशैः[9] समस्तैः ।
विदारयामास स लांगलेन हिमाचलं शैलवरं पृथिव्याम् ॥२२०॥
विदारिते पर्वतराजराजे विनिर्ययौ तज्जलमाशु वेगात् ।
वेगेन शब्देन च सर्वभूतान् सं[10]त्रासमानं कुटिलैस्तरङ्गैः ॥ २२१ ॥
हिमाचलाभैर्गगनं स्पृशद्भिः संप्लावमानं गिरिमस्तकानि ।
संक्षीयमाने सरसस्तु तोये चकार मायां स जलोद्भवाख्यः ॥२२२॥
अथान्धकारं ससृजे समन्तादृश्यमासीद्भुवनं नृवीर ।
शम्भुस्तदा चन्द्रदिवाकरौ द्वौ जग्राह देवोऽथ करद्वयेन ॥ २२३ ॥
प्रकाशं[11]मासीज्जगतो[12] निमेषाद्ध्वस्तं तथा सर्वमथान्धकारम् ।
[13]ध्वस्तेऽन्धकारे हरिरप्रमेयः योगेन कृत्वा त्वपरं शरीरम् ॥२२४॥
दैत्येन युद्धं स चकार सार्धं देहेन चान्येन स युद्धमैक्षत् ।
विष्णोश्च दैत्येन बभूव युद्धं घोरं द्रुमैः पर्वतमस्तकैश्च ॥२२५॥

---

१ केशवो वै व्यवस्थितः D, C. २ Line 2 not in D, C. ३ विनिर्गतः C. ४ नौबन्ध-- D, C. ५ ते विविशुः सर्वतो D. ६ च D. ७ समग्रचन्द्रस्य B, C. ८ समस्तान् D. ९ समग्रैः D. १० संत्रासयानं A, B, C. ११ प्रकाशमू, D. १२ जगतीम् D. १३ गत्वा A, D; ध्वस्ते C.

युद्धं च ते देवगणाः समस्ताः प्रहृष्टचित्ता[1] ददृशुः समन्तात्।
क्रुद्धो[2] हरिस्तत्र रणे तु शीघ्रं चक्रेण देवप्रवरः समान्ते ॥ २२६ ॥
चिच्छेद दैत्यस्य शिरः प्रसह्य ब्रह्मा ततस्तोषमुपाजगाम ॥२२७॥

इति[3] संग्रहपुत्रजलोद्भवाख्य दैत्यवधः ॥

बृहदश्व उवाच।

ब्रह्मा विष्णुश्च शम्भुश्च येषु शृंगेष्ववस्थिताः।
तेषां च नामधेयानि ददुः[4] स्वानि महीतले ॥२२८॥
ऊचुश्च शृंगप्रवरान्[5] शैलेन्द्रस्य महात्मनः।
स्नात्वैव क्रमसाराख्ये सरस्यस्मिन्नरोत्तमः ॥२२९॥
द्रष्टा यः खलु युष्मांश्च[6] दृष्टास्तेन[7] वयं त्रयः
भविष्यामो ध्रुवं[8] शैले त्रिदिवं च प्रयास्यति ॥ २३० ॥

इति[9] नीलमते शैलवर प्रदानम् ॥

बृहदश्व उवाच।

तानेतान्[10] शिखरान्पश्य ब्रह्मविष्णु महेश्वरान्।
नौबन्ध[11] शिखरं यत्तु स एव नृप शंकरः ॥२३१॥
दक्षिणे च हरिः पार्श्वे वामे ब्रह्मा प्रकीर्तितः।
एतान् हि दृष्ट्वा मुच्यन्ते येपि दुष्कृतिनो नराः ॥२३२॥
योऽसौ विष्णुपदो नाम क्रमसारे[12] प्रकीर्तितः।
तस्योदगाश्रमं चक्रे ब्रह्मा[13] देववरः स्वयम् ॥२३३॥
पश्चार्धे[14] चाश्रमं चक्रे कश्यपो भगवानृषिः।
यस्मिन्देशे स्थितो विष्णुर्विजयं प्राप्तवांस्तदा ॥२३४॥
तत्राश्रमपदं चक्रे महादेवः स्वयं प्रभुः[15]।
तस्य चैवापरे भागे ह्यनन्तः स्वाश्रमं[16] महत् ॥२३५॥
चकार हलभृच्छ्रीमान्[17] वासुदेवमते स्थितः।
महादेवाश्रमाद्भागे पश्चिमेऽर्के निशाकरौ ॥ २३६ ॥

---

१ दूरादपश्यन् मुदिताः D. २ ततो हरिः क्रोधविवृत्तनेत्रः D. ३ Line 4 not in D, C. ४ ददौ A. ५ प्रवरं D. ६ युष्माकं C, D. ७ द्रष्टा B. ८ वयम् D. ९ Line 12 not in C. १० तेन D. ११ नौबन्ध शिखरे यस्तु D, C. १२ क्रमसारः D. १३ कश्यपो भगवान् ऋषिः A. १४ Line 20 not in A; पश्चार्धे C; पश्चाग्रे D. १५ प्रभो B. १६ चा—C. १७ फणभृत् D.

चक्रतुः स्वाश्रमौ पुण्यौ सुरम्यौ देव पूजितौ ।
पादेन योजने[1] गत्वा महादेवाश्रमाद्धरिः ॥ २३७ ॥
आत्मनश्चाश्रमं चक्रे नरसिंहेति विश्रुतम् ।
अन्ये च देवाः सरसि वितीये[2]ऽथ पृथक् पृथक् ॥ २३८ ॥
[3]चक्रुः स्वस्याश्रमं तत्र मुनयश्च[4] तपोधनाः ।
आश्रमानि तथा नद्यश्चक्रुस्तीर्थान्यनेकशः ॥ २३९ ॥
गन्धर्वाप्सरसो यक्षाः शैलेन्द्राश्च सगुह्यकाः ॥ २४० ॥
कृतालयौ तत्र जगत्प्रवर्यौ[5] वप्रेन्द्ररुद्रौ सह पद्मजेन ।
कृतालयं तत्र ज · त्समग्रं देशो[6]ऽयमस्ति परमः पवित्रः ॥ २४१ ॥

इति[7] नीलमते नौबन्धतीर्थगताश्रमवर्णनम् ।

बृहदश्व उवाच ।

जलोद्भवासृजं[8] मस्तं तदा चक्रं सुदर्शनम् ।
[9]बभ्राम शून्यं तं देशं प्रज्वलत्तेजसा वृतम् ॥ २४२ ॥
[10]पर्यस्यत्सर्वतस्तेजः प्रजज्वालास्य भास्वरम् ।
दहत्समन्ततो दीप्तं न शशाकात्र कश्चन ॥ २४३ ॥
गृहीतुं तन्महाचक्रं दन्दहत्सर्वतो दिशः ।
अतीव ज्वलितं दृष्ट्वा दह्यमानं क्षणात्क्षणम् ॥ २४४ ॥
आहूय दूरतस्तच्च तदा जग्राह शंकरः ।
चक्रहस्तो जगामाथ यत्र देवो जनार्दनः ॥ २४५ ॥
तमुवाच हरिर्देवं प्रहसन् शंकरं तदा ।
चक्रमर्पय मे देव दैत्यसंघ विनाशनम् ॥ २४६ ॥
[11]मदीयमेतद्विदितं दैत्यानां भयदायकम् ।
इत्युक्तो भगवान् शम्भुः हरिणा लोकधारिणा ॥ २४७ ॥
प्रहसन्तमुवाचाथ हरिं हास्येन शंकरः ।
स्वच्छन्दोऽयं मया प्राप्तो भ्रममाणो यदृच्छया ॥ २४८ ॥
[12]कथं ते प्रतिदास्यामि लब्धमेतन्मया हरे ।
नैतद्दास्याम्यहं विष्णो तुभ्यं स्वीयतया बलात् ॥ २४९ ॥

---

१ योजनं D. २ तु D, C. ३ आश्रमाणि ततश्चक्रुः ऋषयश्च D. ४ स्ते A. ५ प्रधानौ D, C. ६ देशः सपुण्यः D, C. ७ Line 10 not in D. ८ प्रजा B. ९ बभ्राम देशं तं सर्वं तं च जग्राह शंकरः D. १० Line 14 not in C. ११ Lines 22, 23 not in D, C. १२ Lines 26, 27 not in D, C.

प्रतिग्रहेण दास्यामि तव चक्रं जनार्दन ।
[1]इत्युक्तं समुपाश्रुत्य देवदेवो जनार्दनः ॥ २५० ॥
एवमस्त्विति जग्राह त[2]च्चक्रं मधुसूदनः ।
[3]इति नीलमते चक्रप्राप्ति वर्णनम् ॥

बृहदश्व उवाच ।

[4]यस्मिन्प्रदेशे राजेन्द्र [5]भवांस्तिष्ठसि सांप्रतम् ॥ २५१ ॥
[6]स एष देशो यत्रेशैस्तौ प्रहासं प्रचक्रतुः ।
[7]परिहासं तु कृत्वा तु तथा देववरो हरिः ॥ २५२ ॥
[8]हसन्मुखीं निधायात्र प्रतिमामात्मनस्तदा ।
शम्भोर्देव्याश्च राजेन्द्र [9]प्रतिमे तादृशे शुभे ॥ २५३ ॥
[10]हसन्मुखे विधायाशु स्वस्थचित्तो बभूव ह ।
एतास्ताः प्रतिमाः राजन् हसन्मुख्योऽत्र संस्थिताः ॥ २५४ ॥
यासां दर्शनमात्रेण यान्ति पापानि संक्षयम् ।
तादृशं संविधानं तु [11]लीलारूपं जनार्दनः ॥ २५५ ॥
वि[12]धाय शुशुभे तत्र महादेवेन संयुतः ।
जनार्दनकृतं दृष्ट्वा संविधानं तथाविधम् ॥ २५६ ॥
जलोद्भवसरस्यस्मिन्कृतवानास्पदं हरिः [हरः] ।
इमौ मनुष्यशार्दूल यत्र सन्निहितावुभौ ॥ २५७ ॥
केशवश्च शिवश्चैव सर्वकल्मषनाशनौ ।
कृतदेव प्रतिष्ठानं देवदेवं जनार्दनम् ॥ २५८ ॥
ऋषयो देवता नागा गंधर्वाप्सरसां गणाः ।
द्रष्टुं सर्वे समाजग्मुः जलोद्भवसरस्यथ ॥ २५९ ॥
[13]इति नीलमते हरिहरदेवप्रतिमाप्रतिष्ठावर्णनम् ॥

बृहदश्व उवाच ।

देवर्षिनागमुख्येष्वधिष्ठितेष्वथ कश्यपः ।
उवाच वरदं विष्णुं [14]हस्तौ बद्ध्वा पुरस्थितः ॥ २६० ॥

---

१ Line 2 not in D, C. २ तं C. ३ Line 4 not in D. ४ अस्मिन् D, C. ५ यत्र वर्तसि D, C. ६ Line 7 not in D, C. ७ तादृशं परिहासं तु कृत्वा D, C. ८ तादृशीं कारयामास D, C. ९ यथा वृसमरिन्दम D, C. १० Lines 11 to 13 not in D, C. ११ कारयित्वा C. १२ Lines 15, 16 not in D, C. १३ Line 23 not in D. १४ बाहू B.

भगवन्भूतभव्येश शंखचक्रगदाधर ।
भवतां सत्प्रसादेन वाञ्छाम्येकं वरं परम् ॥ २६१ ॥
भगवन्तः प्रसादेन [1]भवतां स जलोद्भवः ।
निःशेषोऽभूद्भयह सर्वं गतमेतन्निवासिनाम् ॥ २६२ ॥
सांप्रतं चापि भगवन् देशोऽयं देवमानुषैः ।
[2]वस्तव्यो रमणीयश्च पुण्यश्च भविता तथा ॥ २६३ ॥

इति नीलमते कश्मीरवास प्रार्थना ॥

बृहदश्व उवाच ।

कश्यपे ब्रुवतीत्येवं नागा वचनमब्रुवन् ।
[3]अहो धिक् किमिदं तात वाञ्छस्यस्मदनर्थदम् ॥ २६४ ॥
क्व नागवसतिः कुत्र वासश्चापि नृणां खलु ।
अल्पायुषां सुदुःखानां तथा [4]स्वल्पदृशामपि ॥ २६५ ॥
न वयं मानुषैः सार्धं वसामो मुनिपुंगव ।
[5]कथमेषा मतिर्जाता तवास्मान्प्रति भूरि[6]दं ॥ २६६ ॥

इति नीलमते नागवचनम् ॥

बृहदश्व उवाच ।

तानुवाच तथा क्रुद्धः कश्यपो वै[7] प्रजापतिः ।
मम वाक्यमनादृत्य यस्माद्[8]दृष्टं प्रभाषथ ॥ २६७ ॥
तस्मात्पिशाचैः सहिता वसध्वं नात्र संशयः ।

इति नीलमते कश्यपशापवर्णनम् ॥

बृहदश्व उवाच ।

एवं [9]शप्ते कश्यपेन नीलः प्राञ्जलिरब्रवीत् ॥ २६८ ॥
एते [10]क्रोधवशाद्ब्रह्मन्नाभिजानन्ति किंचन ।
[11]क्षन्तुमर्हसि नो ब्रह्मन्न शापः प्रभवेदयम् ॥ २६९ ॥
अहो कष्टतरं तात गरुडस्तद्भयं परम् ।
अद्य तावन्महत्प्राप्तं सांप्रतं किमिदं प्रभो ॥ २७० ॥

---

१ युष्माकं D. २ वसतां A, B; वस्यतां C. ३ Lines 10 to 12 not in C. ४ तद्वदल्पद्विषामपि D. ५ Line 14 not in C. ६ मानद D. ७ स D. ८ दुष्ट A, B, C. ९ उक्ते C. १० क्रोधवशः D, C. ११ Lines 24 to 8 of page 23 not in C.

पालनीयान्प्रभोऽथ त्वं प्रसादं देहि नः प्रति ।
इमे यथा सुखं तात प्राप्नुयुस्तद्विधेहि भो ॥ २७१ ॥
इत्येवं बोधितो वाक्यैः[1] पुत्रेण प्रयतात्मना ।
नीलेन कश्यपः प्रेम्णा तमाह[2]स कृपान्वितः ॥ २७२ ॥

कश्यप उवाच ।

पुत्र जानीहि ते तात दुष्टात्मान इमे किल ।
यावद्दोषफलं नैते प्राप्नुयुस्तावदेव तु ॥ २७३ ॥
न प्रशाम्यन्ति जात्वेते तस्मात्सत्यं ब्रवीमि ते ।
मा भैषीस्तत्फलं प्राप्य शान्ता वत्स्यन्ति सौहृदात् ॥ २७४ ॥

नील उवाच ।

क्षन्तुमर्हसि ब्रह्मन्मे नैतदर्हा इमे किल ।
प्रसादयित्वा शिरसा भगवन्क्षन्तुमर्हसि ॥ २७५ ॥

इति नीलमते कश्यपनीलसंवादः ॥

बृहदश्व उवाच ।

एवमुक्तः स नीलेन ऋषिः परमधार्मिकः ।
उवाच[3] वचनं चारु कश्यपोऽथ प्रजापतिः ॥ २७६ ॥
वालुकार्णवमध्ये तु द्वीपः षड्योजनायतः[4] ।
तत्र सन्ति पिशाचा ये दैत्यपक्षाः सुदारुणाः ॥ २७७ ॥
तेषां तु निग्रहार्थाय पिशाचाधिपतेर्बली ।
निकुम्भनामा धर्मात्मा कुवेरेण तु योजितः ॥ २७८ ॥
चैत्र्यां याति सदा योद्धुं[6] पिशाचैर्बहुभिः सह ।
पञ्चकोट्यः पिशाचानां निकुम्भस्यानुयायिनाम् ॥ २७९ ॥
गत्वा निकुम्भस्तैः सार्धं षन्मासान्योध्यते सदा ।
तत्र[7] कोट्यश्च पञ्चैव पिशाचानां दुरात्मनाम् ॥ २८० ॥
योधिकाः कोटिदशका नाशमायान्ति ते सदा ।
पक्षयोरुभयोर्नील षड्भिर्मासैः सदैव तु ॥ २८१ ॥
निकुम्भः पुनरायाति पञ्चकोटिर्वृतो[5] बली ।
शुक्लाश्वयुक्[9] पञ्चदश्यां नित्यं देवप्रसादतः ॥ २८२ ॥

---

१ वाक्यं B. २ स D. ३ कश्यपस्तमुवाचाथ C. ४ Line 16 not in C. ५ युत C. ६ युद्धं A, B, D. ७ तत्रापि कोट्यः पञ्चैव C. ८ समो C. ९ शुक्लांशुयुक् B.

हिमाचले तु षण्मासान् वसत्येष[1] सदा सुखी ।
[2]अद्य प्रभृति षण्मासान्तस्येह वसतिर्मया ॥ २८३ ॥
[3]दत्तेति सहितस्तेन ससैन्येनेति,वत्स्यथ ।
षण्मासान् मानवैः सार्धं निकुम्भे निर्गते सदा ॥ २८४ ॥
एवमुक्तस्तदा नीलः पितरं चाह धार्मिकः ।
नित्यमेव हि वत्स्यामो मनुष्यैः सहिता वयं ॥ २८५ ॥
न पिशाचैस्तु वत्स्यामो दारुणैर्दारुणप्रियैः ।
एवं ब्रुवति नागेन्द्रे नीलं[4] विष्णुरभाषत ॥ २८६ ॥

विष्णुरुवाच

मुनिवाक्यं तु भविता नीलैवं तु चतुर्युगम् ।
ततः परं तु [5]सुखिनो मनुष्यैः सह वत्स्यथ ॥ २८७ ॥
अल्पवीर्याः पिशाचाश्च भविष्यन्तीह सर्वदा ।
वीर्योपेता[6] गमिष्यन्ति षण्मासं वालुकार्णवम् ॥ २८८ ॥
नागस्य यस्य ये स्थाने निवसिष्यन्ति मानवाः ।
ते तं संपूजयिष्यन्ति पुष्पधूपानुलेपनैः ॥ २८९ ॥
नैवेद्यैर्विविधैर्गन्धैः[7] प्रेक्षा[8]दानैश्च शोभनैः ।
त्वयोक्तं च सदाचारं पालयिष्यन्ति ये जनाः ॥ २९० ॥
तेऽत्र[9] देशे धान्यपुत्र पशुपौत्रसमन्विताः ।

[10]इति नीलमते विष्णुवरदान नाग पूजाविधानवर्णनम् ॥

बृहदश्व उवाच ।

कः प्रजापतिरुद्दिष्टः कश्यपश्च प्रजापतिः ॥ २९१ ॥
[11]तेनासौ निर्मितो देशः कश्मीराख्यो भविष्यति ।
कं वारि हरिणा यस्माद्देशादस्मादपाकृतम् ॥ २९२ ॥
कश्मीराख्यं ततो पश्य नाम लोके भविष्यति ।

[12]इति नीलमते कश्मीर निरुक्तिः ॥

यैवोमा सैव कश्मीरा यस्मात्तस्माद्धि जंगम ॥ २९३ ॥
विशोकेत्यभिविख्याता [13]भ्रमिता च तथा मया ।
स्त्रीरूपधारिणी भूत्वा वृद्धतीर्थे निवत्स्यति ॥ २९४ ॥

[14]इति नीलमते उमाकश्मीरैक्यं–लक्ष्मीरूपविशोकावर्णनं च ॥

---

१ स सदा वसति सुखी C; तस्येह वसतिर्महा A. २ Line 2 not in A. ३ दत्ता तु C. ४ नीले C. ५ सहिताः C. ६ दूत्यप्येते C. ७ धूपैः C. ८ पृच्छा B. ९ तेऽस्मिन्देशे C. १० Line 19 not in C. ११ तेनेदं निर्मितं देशं C. १२ Line 25 not in C. १३ भूरिता C. १४ Line 29 not in C.

बृहदश्व उवाच ।

वासुकेर्नागराजस्य तस्मिंस्तीर्थवरे सदा ।
वसतिर्भविता नाग तत्रस्थं तं च पूजय ॥ २९५ ॥
ममांशः स तु नागेन्द्र नागानामीश्वरेश्वरः ।
तस्याज्ञां विफलां कुर्वन्मम हस्ताद्विनश्यति ॥ २९६ ॥
[1]तस्मादस्य सदा पूजां बलिं च विधिना बुधः ।
वि[2]दध्यात्सन्नि[3]वासस्थै[4]रभ्यर्च्योऽसौ सदा मुदा ॥ २९७ ॥
नागानामालयं नील नाम्ना भोग[5]वतीं पुरीम् ।
[6]योगी भूत्वा स नागेन्द्र पालयिष्यति तां सदा ॥ २९८ ॥
इहापि देशरक्षार्थं मच्छास्त्याऽसौ कृतालयः ।
नि[7]वसेदन्यवपुषा तस्मादर्च्यः शिवार्थिभिः ॥ २९९ ॥
प्रधान्येन शरीरेण भोगवत्यां तु वासुकिः ।
पालयन् व[8]त्स्यति नाग इहाप्यंशेन सत्तम ॥ ३०० ॥
तेनाभिषिक्तो विधिना [9]त्वं चेह वस सर्वदा ।

इति नीलमते वासुकिनीलनिवासवर्णनम् ॥

बृहदश्व उवाच ।

एवमुक्तस्तदा विष्णुः प्रययावीप्सितां गतिम् ॥ ३०१ ॥
देवर्षिनागगन्धर्वा प्रययुस्ते यथागतम् ।
नानादेशसमुत्थैस्तु ततः प्रभृति मानवैः ॥ ३०२ ॥
चतुर्व[10]र्णान्वितैः शूरवीरविद्वत्समागतैः ।
देशे वसति षण्मासान् षण्मासान्पि[11]शिताशनैः ॥ ३०३ ॥
कृत्वा मनुष्याः राजेन्द्र धान्यसस्यादिसंग्रहम् ।
आदायाज्ञां विनिर्यान्ति चैत्र्यामायान्ति सर्वदा ॥ ३०४ ॥

इति नीलमते मनुष्यसमागमवर्णनं—षण्मासतन्निवासवर्णनं च ॥

एवं निविष्टान् कश्मीरान्दृष्ट्वा हृष्टस्तु कश्यपः ।
आराध्य शंकरं देवमुमां देवीमचोदयत् ॥ ३०५ ॥
देशस्य पावनायाऽस्य तोयदानेन पार्थिव ।
सा वितस्तेति विख्याता नदी पापप्रणाशिनी ॥ ३०६ ॥

---

१ Lines 6, 7 not in C. २ तु C, D. ३ निवासस्तैः C, D. ४ अभ्यूह्य C, D. ५. भोगवती पुरी D. ६ योगीभूय तु D. ७ अर्चया मान्यः A. ८ वत्स ते D. ९ वस त्वमपि D. १० बला–C. ११ पिशिताशिनः D.

आराध्य केशवं [1]चापि तथा लक्ष्मीमचोदयत् ।
देशस्य पावनायास्य सा विशोकेति कीर्तिता ॥ ३०७ ॥
अदितिर्देवमाता च कश्यपेन प्रचोदिता ।
त्रिकोटिर्नामतो भूत्वा नदीदेशे प्रसर्पति ॥ ३०८ ॥
शक्रपत्नी शची [2]याच सा च कश्यपचोदिता ।
नाम्ना हर्षपथा याता देशेऽस्मिन् पाप[3]सूदनी ॥ ३०९ ॥
[4]दितेश्चन्द्रवती जाता देशेऽस्मिन् पापनाशिनी ।
स्वमंशं यमुनादेवी वितस्तायै समर्पयत् ॥ ३१० ॥
एवं कश्यपवाक्येन देव[5]दानवमातरः ।
देवपत्न्यस्तथा पुण्याः सरिद्रूपत्वमागताः ॥ ३११ ॥
तदा कश्यपवाक्येन [6]तीर्थसागरनिम्नगा ।
[7]कश्मीरेषु तदा जग्मुः सान्निध्यं पुण्यवृद्धये ॥ ३१२ ॥
एवं नरेन्द्र कश्मीरा प्राप्ते वैवस्वतेन्तरे ।
समुत्पन्ना महापुण्या हरभार्या सती शुभा ॥ ३१३ ॥
कश्मीरायां तथा राजा त्वया ज्ञेयो हरांशजः ।
तस्यावज्ञा न कर्तव्या सततं भूतिमिच्छता ॥ ३१४ ॥

इति नीलमते [8]देशनिवासोमालक्ष्म्यदितिशचीदितीनां वितस्ताविशोकागंगाहर्ष-पथायमुनावर्णनपूर्वं कश्मीरप्राप्तिवर्णनम् ॥

गोनन्द उवाच ।

कथं [9]सती शची गंगा अदितिर्यमुना दितिः ।
सरित्त्वमिह संप्राप्ता या च देवी करीषिणी ॥ ३१५ ॥

बृहदश्व उवाच ।

[10]कदाचित्कश्यपं द्रष्टुं ययुर्देव्यः प्रकीर्तिताः ।
तं पश्यन्तं महाभागं प्रजापतिसुतं वरम् ॥ ३१६ ॥
विधाय दर्शनं तस्य प्रीतचित्ताः समागताः ।
तास्तमूचुर्महात्मानं प्रसादं कुरु नः प्रभो ॥ ३१७ ॥
तास्तत्र चोदयामास कश्यपो भगवानृषिः ।
[11]कश्मीरा नाम सुभगो देशो यो निर्मितो मया ॥ ३१८ ॥

---

१ देवं C. २ भार्या C. ३-सूदिनी C. ४ दितिः D, C. ५ मानव C. ६ देव A, B, C, D. ७ कश्मीरेषु A, B, D. ८ देशनिवेशो C. ९ सीता A, B, C. १० Lines 24—26 not in C, D. ११ कश्मीरो C.

तं देशमम्बुदानेन भावयिष्वं शुचिस्मिताः ।
अदितिश्च दितिश्चैव शची गंगा च निम्नगा ॥ ३१९ ॥
[१]इति प्रचोदितास्तेन कश्यपेन महात्मना ।
प्रणम्य शिरसा चैनमूचुः प्राञ्जलयो मुनिम् ॥ ३२० ॥
भगवंस्त्वत्प्रसादेन दर्शनेनामुना तव ।
पूताःस्मो नु करिष्यामो वचनं तव सुव्रत ॥ ३२१ ॥
[२]यत्तेऽभिलषितं चित्ते तथास्तु इति ता मुनिम् ।
प्रणम्य निर्गताः हर्षान्ननाम च करीषिणी ॥ ३२२ ॥
[३]इत्थं प्रसन्नचित्तोऽसौ देशसंपत्तये पुनः ।
आराधयामास तदा [४]सत्यर्थं शंकरं विभुम् ॥ ३२३ ॥
[५]अथास्य तुष्टो भगवान् उवाच वृषभध्वजः ।
किं ते कार्यं समाध्वत्सु प्रीतोऽस्मि तपसा तव ॥ ३२४ ॥
इति प्रसन्नचित्तं स विज्ञाय सकलेश्वरम् ।
सत्यर्थं चोदयामास महेशानं जगत्पतिम् ॥ ३२५ ॥
विदितं भगवन्सर्वं यथा प्रयसितं मया ।
पावनायास्य देशस्य सतीमिच्छामि शंकर ॥ ३२६ ॥
यासौ स्वयं महेशानी भूत्वा चैव सरिद्वरा ।
इमं मद्रचितं देशं जीवनेनापि पावयेत् ॥ ३२७ ॥
इति विज्ञापितो शम्भुरतीव मुदिताशयः ।
तदोवाच हरो भार्यां कुरु कश्यपभाषितम् ॥ ३२८ ॥
[६]इत्युक्तासौ भगवता हरेण परमादरात् ।
[७]अवोचत्तं ऋषिं देवी सच्च देशस्तनुर्मम ॥ ३२९ ॥
यदा तदा पूत एव पुनः [८]किं क्रियते मया ।

बृहदश्व उवाच ।

[९]इत्युक्तेऽसौ तया देव्या कश्यपस्तपसां निधिः ॥ ३३० ॥
प्रणम्य शिरसा भूयस्तामवोचत्पुरःस्थिताम् ।

कश्यप उवाच ।

पिशाचैः सह संपर्कस्तत्र नित्यं यदा नृणाम् ॥ ३३१ ॥

---

१ Lines 3–6 not in C, D. २ एवमस्त्वित्यभाषन्त नोमा न च करीषिणी D;...भाषन्ते न नाच...C. ३ Line 9 not in C, D. ४ सत्यर्थेन च शंकरं. ५ Lines 11–19 not in C, D. ६ Line 21 not in C, D. ७ ततोवोचत् C, D. ८ किं मया तत्र कारणं D. किं मदागमकारणं C. ९ Lines 24–26 not in C. D.

तदा तेषां मतिः पापात्सततं नापसर्पति ।
अपूज्याः सर्वदेशेषु दुराचारा मलावृताः ॥ ३३२ ॥
न[1] स्युर्मदीयाः (ख) यथा तथा धातुं त्वमर्हसि ।
महत्क्षेत्रमिदं चैव ब्रह्मविष्णुशिवाश्रितम् ॥ ३३३ ॥
पापं तद्[2]विहितं क्षेत्रे यन्मे गुरुतरं मतम् ।
[3]तस्मा[4]न्मद्विषये देवि कृपां कृत्वा ममोपरि ॥ ३३४ ॥
तयैव पापं यत्तेषां शमनीयं वरानने ।

[5]इति नीलमते शम्भुगौरीप्रसादनम् ॥

बृहदश्व उवाच ।

इति तथ्यं विदित्वा सा क्षमया परया युता ॥ ३३५ ॥
उवाच देवी भर्तारं चारुचन्द्रनिभानना ।
रसातले नदीरूपं करिष्यामि जगद्गुरो ॥ ३३६ ॥
कुरु शूलप्रहारं त्वं नीलवेश्म समीपतः ।
यत्रासीन्नाकुलमुखं प्राग्प्रभो शैल[6]दारणे ॥ ३३७ ॥
तेन श[7]ूलप्रहारेण निष्क्रम्याहं रसातलात् ।
ह[8]लमार्गेण यास्यामि यावत्सि[9]न्धुं महानदम् ॥ ३३८ ॥
त[10]था कृते च शर्वेण तथा चक्रे सती शुभा ।
तस्या नाम वितस्तेति कृतवान् शंकरः स्वयम् ॥ ३३९ ॥
वितस्तिमात्रं ग[11]र्तं तु शूलेन कृतवान् हरः ।
रसातलगता येन निष्क्रान्ता सा सरिद्वरा ॥ ३४० ॥
तस्माद्वितस्तेति कृतं ना[12]म तस्याः स्वयम्भुवः ।
त[13]तोऽपि सर्वदेशेषु वा[14]र्ताऽभूदियमुत्थिता ॥ ३४१ ॥
म[15]हेश्वरी मुनिप्रीत्या पुनर्देशं व्यपीपिवत् ।
तेषु तेषु च देशेषु लोकाः शुश्रुवुरुत्कया ॥ ३४२ ॥
सती देवी नदी भूत्वा कश्मीरेभ्यो विनिर्गता ।

[16]इति नीलमते सत्यावितस्तारूपाविर्भाववर्णनम् ॥

---

१ Lines 3, 4 not in C. D. २ कृतं च यत् D, C. ३ Line 6 not in C, D. ४ तत् A. ५ Line 8 not in C, D. ६ शैलदारणं C. ७ शैल A, B. ८ शिला A, B. ९ सिन्धुर्महानदः C, D. १० तथा चक्रे हरो देवः D, तत्र चक्रे हरो देवः C. ११ गन्तुं A, B. १२ नामैतस्याः C. D. १३ ततस्तु C. D. १४ जनः शुश्राव पार्थिव C, D. १५ Lines 23, 24 not in C.D. १६ Lines 26 to the 2nd of page 29 not in C,D.

कश्मीरेषु वितस्तायां स्रवन्त्यां सौम्यतो नृप ॥ ३४३ ॥
निशम्य सर्वतोऽप्ययं जनः पावनकांक्षया ।
महापातकसंयुक्तस्तस्यां स्नातुं तदा[1] जनः ॥ ३४४ ॥
आजगाम भयात्तेषां शूलखातनियोजनात् ।
रसातलं जगाम[2]सौ पुनस्तामेव कश्यपः ॥ ३४५ ॥
प्रसाद्यो[3]न्मोचयामास पञ्चहस्तसमीपतः ।
पञ्चहस्तस्य नागस्य भुवनात्तां विनिर्गतां ॥ ३४६ ॥
गव्यूतिमात्रमायातां कृतघ्नो निर्ददर्श[4] ह ।
सा तु दृष्ट्वा कृतघ्नेन तिरोधानं[5] गता पुनः ॥ ३४७ ॥
भूयः कश्यपवाक्येन चोदिता निम्नगोत्तमा ।
न[6]ष्टक्रात्क्रोशमात्रे तु प्रददौ दर्शनं तदा[7] ॥ ३४८ ॥
मित्रस्त्रीगामिना दृष्ट्वा भू[8]योऽदर्शनमागता ।
त[9]था कश्यपवाक्येन नरसिंहाश्रमे शुभा ॥ ३४९ ॥
उ[9]न्मग्नाऽसौ सती विप्रैस्तूयमाना सहस्रशः ।
क्रोशमात्रं ततो दृष्ट्वा ब्रह्मघ्नेन महानदी । ३५० ॥
अन्तर्धानं जगाम[10]सौ ततस्तामाह कश्यपः ॥ ३५१ ॥
नमोऽस्तु ते पर्वत राज[11]कन्ये नमोऽस्तु तुभ्यं ऋषिवर्यजुष्टे ।
नमोऽस्तु तुभ्यं हरसंगल[12]ब्धपवित्रभावे वरदे वरेण्ये ॥ ३५२ ॥
सुपुण्यतोये [13]सुरकामिनीभिश्चिक्रीडमानाभिरुपेत[14]तीरे ।
देवद्विजाद्यैरुपगू[15]ह्यमाने सुशीततोये विमले विशोके ॥ ३५३ ॥
[16]एभ्यो हि भीता प्रपलायसि त्वं त्वद्दर्शनादेव विमुक्तपापाः ।
[17]कृताम्बरा[18]स्ते गतसर्वपापास्[19]त्वां भासयन्ति प्रभया महत्या ॥३५४॥
कृ[20]शानुदग्धस्य यथा सुचित्तं त्वद्दर्शनाद्देवि तथा सुचित्तम् ।
सर्व पवित्रं भवतीह मातः पापं, महेशानि कुरु प्रसादम् ॥३५५॥
पापानां पावनार्थाय प्रार्थितासि म[21]हापगे ।
तस्मात्पावय पापानि मा प्रणा[22]शं व्र[23]जाशुगे ॥ ३५६ ॥

१ ययुस्ततः C. २ आशु C. ३ प्रसाद्योन्मज्जयामास C, D. ४ तां ददर्श वै C, D. ५ ह्यन्तर्धानं C, D. ६ उष्ट्रकात् D. ७ ततो C. ८ भूयः C, D. ९ उन्मज्जत नदी विप्रैः C, D. १० आशु C. ११ पुत्रि D. १२ लुब्ध D. १३ योषिताभिः C, D. १४ नीरे D. १५ रक्षमाना D. गाह्यमाना C. १६ येषां C, D. १७ Line 22 not in D. १८ ते भासयन्त्या C. १९ सत्पर्चिः C, D. २० तद्वत् C, D. २१ महानदि C, D. २२ प्रणामम् A, B. २३ व्रजाशु मे D.

एवं प्रसादिता भक्त्या कश्यपेन महात्मना ।
उवाच कश्यपं देवी तं तथा वादिनं तदा ॥ ३५७ ॥
अत्यन्तपापसंयुक्तान् पावयितु[2]मुत्सहे ।
तथात्र[3] प्रेरय विभो[4] लक्ष्मीं शार्ङ्गधरप्रियाम् ॥ ३५८ ॥
शक्ता हि पावने ब्रह्मन् त्रैलोक्यस्यापि सा भवेत् ॥
अदितिश्च दितिश्चैव तथा[5] गङ्गा महानदी ॥ ३५९ ॥
अन्याश्च सर्वाः सरितस्तस्या साम्यं न बिभ्रति ।
केवलं प्रार्थयस्वाद्य लक्ष्मीं केशववल्लभाम् ॥ ३६० ॥

[6]इति नीलमते वितस्तावचनम् ॥

बृहदश्व उवाच ।

स तस्या वचनं श्रुत्वा प्रययौ भगवान् किल ।
गोविन्दमाराधयितुं श्वेतद्वीपं विहायसा ॥ ३६१ ॥
सं[8]प्राप्य तत्र गोविन्दं प्रणम्य विधिवन्मुनिः ।
पार्वत्युक्तं वचस्तस्मै यथावत्सर्वमूचिवान् ॥ ३६२ ॥
सभाजयित्वा स मुनिं भगवान् गरुडध्वजः ।
उवाच परया प्रीत्या मुनिं विस्मापयन् हरिः ॥ ३६३ ॥
प्रीतोऽस्मि परमर्षे ते यथेच्छा ते प्रवर्तते ।
तथा करोमि भद्रं ते प्रीतोऽस्मि तपसा तव ॥ ३६४ ॥
इत्युक्त्वा भगवान्विष्णुस्तं मुनिं परया मुदा ।
आसन्नगां रमां प्राह गच्छ त्वं देवि मा चिरम् ॥ ३६५ ॥
केशवेनैवमुक्ता तु लक्ष्मी शोकसमन्विता ।
उवाच वाक्यं प्रथमं गता तत्र सती विभो ॥ ३६६ ॥
पश्चान्मम गतायाः सा ध्रुवं नाम हरिष्यति ।
एवं सशोकां विज्ञाय कश्यपस्त्वब्रवीत्पुनः ॥ ३६७ ॥
त्वमेव परमा शक्तिर्बहुभिर्मुनिभि[11]स्तुता ।
क्षीरोदकन्ये विरजे[12] पवित्रे मङ्गलास्पदे ॥ ३६८ ॥
त्वमेव[13] देवि कश्मीरा त्वमेवोमा प्रकीर्तिता ।
त्वमेव सर्वदेवीनां मूर्तिभिर्देवि संस्थिता ॥ ३६९ ॥

---

१ तथा C. २ नाहं पावितुं C, D. ३ तदा C. ४ प्रभो D. ५ या च C, D. ६ Line 9 not in C, D. ७ स A, B, D. ८ Lines 13-18 not in C, D. ९ गोविन्दस्त्वब्रवीत् लक्ष्मीम् C, D. १० यस्मात् D. ११ मूर्तिभिः स्थिता C, D. १२ विजये D. १३ तमेव सा D.

[1]न त्वया सदृशी काचिदिह देवि नमोऽस्तु ते ॥ ३७० ॥
प्रसीद मातर्जगदेकलक्ष्मि प्रसीद देवेशि जगन्निवासे ।
प्रसीद नारायणि शंकरेशि प्रसीद पद्म कमलांकिते मे ॥ ३७१ ॥
वैतत्तमम्भस्तव तोयमिश्रं पी[2]यूषयुक्तं मधु चास्ति मातः ।
स्नातस्त्वदम्भस्यपि पापमग्नाः सद्योविमुक्ता विमलीभवन्ति ॥ ३७२ ॥
एवं स्तुता[3]ऽसौ मुनिना विशोका समपद्यत ।
चिन्तयामास वरदा भर्तृ[4]वाक्यं ध्रुवं मया ॥ ३७३ ॥
कर्तव्यं मुनिवाक्यं च किं विचारेण मे पुनः[5] ।
नदी भूत्वा च[6] कश्मीरान् गच्छन्ती वाक्यमब्रवीत् ॥ ३७४ ॥
पुन[7] स्तामृषिवर्योऽसौ प्रणिपातपुरस्सराम् ।
व्रज शीघ्रं यावदिह त्वत्प्रतीक्षा सती स्थिता ॥ ३७५ ॥
यावत्सा प्रथमं देशं[8] न [9]धावयति सुन्दरि ।
ताव[10]त्त्वं धावयतु येन तव नाम भविष्यति ॥ ३७६ ॥
[11]तस्य तद्वचनं श्रुत्वा विशोका समपद्यत ।
तस्माद्विशोकेति नदी सततं कथ्यते जनैः ॥ ३७७ ॥
[12]आगतां तां च कश्मीरान्सर्वैर्दिव्यै निवेदयत् ।
[13]महात्माऽसौ मुनिवरो हर्षसंपूर्णमानसः ॥ ३७८ ॥
लक्ष्म्या विचेष्टितं श्रुत्वा सती च बहु[14] विस्तरम् ।
दृष्टा मार्गेण चोत्तस्थौ धौम्याश्रमसमीपतः ॥ ३७९ ॥
आखुर्बिलेन शून्यत्वाद्विशोका[15] चाप्यनन्तरम् ।
आजगाम वि[16]तस्तां च ददर्श पुरतःस्थिताम् ॥ ३८० ॥
दृष्ट्वा वितस्तां गतमत्सरा सा जगाम योगं च त[17]था विशोका ।
पूर्वागता तत्र तदा वितस्ता [18]जग्राह नाम [19]स्वमतः क्षितीश ॥ ३८१ ॥

[20]इति नीलमते वितस्ता–विशोका संगम वर्णनम् ॥

---

१ Lines 1–3 not in C. D. २ मध्वमृताढ्यं तु यथा तथास्तु C, D. ३ कश्यपेन C, D. ४ भर्तुः A. ५ वै मम C, D. ६ जगामाशु कश्मीराः C. D. ७ Line 10 not in C, D. ८ देवि D. ९ भावयति C, D. १० भावयतु D. ११ तस्याः C, D. १२ मनोरमापि कश्मीरा C, D. १३ Line 17 not in C, D, १४ श्रुतविस्तरा C, D. १५ विशोकामाप्य D. १६ वितस्ता D. १७ तथा D. १८ जगाम D. १९ क्षितिपः प्रधानः D. २० Line 24 not in C. D.

बृहदश्व उवाच ।

कश्यपं[1] तु तदा क्रुद्धा विशोका त्वशपत्[2]प्रभो ।
उपशील्या[3]नृतेनाद्य त्वया यस्मादहं खलु[4] ॥ ३८२ ॥
सती च श्राविता यस्मात्त्वया मम विचेष्टितम् ।
तस्मात्ते प्रायशो भावी जनः खल्वनृते रतः ॥ ३८३ ॥
अपूजनीयो लोकेषु मलवान् कर्मकृत्तथा ।
यन्मे नाम[5] हृतं सत्या न मे व्रीडात्र जायते ॥ ३८४ ॥
यैवाहं सैव कश्मीरा सती देवी न संशयः ।
[6]इति नीलमते विशोकादत्तशापवर्णनम् ॥

सती लक्ष्मीसमेता तु पावयन्ती ततो जनम् ॥ ३८५ ॥
जगाम[7] हलमार्गेण मन्दं मन्दं सरिद्वरा ।
अदितिर्देवमाता च[8] त्रिकोटीह्यभिविश्रुता ॥ ३८६ ॥
संयोगं[9] सा गता देव्या तया[10] प्राप्ता वितस्तया ।
ततः शची शक्रपत्नी नाम्ना शक्रपथा नदी ॥ ३८७ ॥
ततश्चन्द्रवती नाम दितिर्दैत्यारणिर्नृप ।
एवं क्रमेण सा देवी गृह्णात्यथ सरिद्वरा ॥ ३८८ ॥
जगाम गंगया सार्धं संगमं[11] सिन्धुना सह ।
[12]प्रयागभूमावक्षय्यच्छायावृक्षसमीपतः ॥ ३८९ ॥
वैतस्तमम्भः सह सैन्धवेन युक्तं यथा क्षीरमिवामृतेन ।
लावण्ययुक्तं च यथैव रूपं शीलेन युक्तं च यथा श्रुतं स्यात् ॥३९०॥
शौर्यं यथा स्याद्विनयेन युक्तं धर्मं यथा स्याद्द्रविणेन युक्तम् ।
[13]मूर्तिर्युता वा सजयैव राजन् कामो[14] यथा स्यान्मनसोपपन्नः[15] ॥ ३९१ ॥
रत्नं यथा स्यात्कनकेन युक्तमायु[16]र्यथा स्वास्तियुतं नृवीर ।
सम्मानयुक्तश्च यथैव लाभस्तथैव[17] सा तत्र तदा बभूव ॥ ३९२ ॥
तपनस्य सुता देवी गंगा स्नेहन यन्त्रिता ।
बहुमानान्मुनेर्भक्त्या स्वेनांशेन विवर्धयत् ॥ ३९३ ॥

१ कश्मीरां C, D. २ त्वबदत् C. ३. उपशीर्णा C, D. ४ खले C, D. ५ मानं D. ६ Line 9 not in C, D. ७ जग्राह A. ८ तु D. ९ संयोगसहिता D; संयोगसहितो C. १० ततः प्राप्ते C. ११ संयोगं C, D. १२ Line 18 not in C, D. १३ मृत्सा यथा स्यात् मृजापि राजन् B. १४ कामं C, D. १५ पन्नं C, D. १६ साधु C. १७ तथातु C, D.

वितस्तां तु सरिच्छ्रेष्ठां सर्वकल्मषनाशिनीम् ।
गंगा सिन्धुस्तु विज्ञेया वितस्ता यमुना तथा ॥ ३९४ ॥
[2]तयोर्ध..........वितस्ता यमुना मता[1] ।
[3]असौ प्रयागो विज्ञेयस्तयोर्यत्र तु संगमः ॥ ३९५ ॥
गंगातोयमथादाय गंगां तु यमुनाऽब्रवीत् ।
प्रयागेऽपहृतं नाम त्वया मे वरवर्णिनि ॥ ३९६ ॥
[4]कश्मीरेषु तथा नाम मया चापहृतं तव ।
नामब्रवीत्ततो गंगा भूय एव मया तव ॥ ३९७ ॥
हृतव्यं नाम सुभगे यदाऽहं सिन्धुसंज्ञिता[6] ।

[5]इति नीलमते गंगायमुनयोरन्योन्योपालम्भवर्णनम् ॥

बृहदश्व उवाच ।

इति तथ्यं सती ज्ञात्वा हलमार्गात्तु सिन्धुतः ॥ ३९८ ॥
हिमालयाच्च प्रययौ पावितात्मा[7] परं नदी ।
पुनस्तां तु महाभागां ऋषिः प्रोवाच कश्यपः ॥ ३९९ ॥
अवश्यं हलमार्गेण गन्तव्यं सुभगे त्वया ।
अन्यथा देश एवाऽयं सरस्त्वमुपयास्यति ॥ ४०० ॥
भूयो भूयश्चोद्यमाना कश्यपेन सरिद्वरा ।
क्रोधात्ततो विनिष्क्रान्ता हलमार्गेण तेन सा ॥ ४०१ ॥
[8]ततः क्रोधसमावेशादभूत्सा मलिना तदा ।
तस्मिन्देशे प्रसन्नाऽपि दृश्यते कलुषा नदी ॥ ४०२ ॥

[9]इति नीलमते वितस्ताकोपवर्णनम् ॥

बृहदश्व उवाच ।

कोपितां तामथावेद्य वितस्तां परमां नदीम् ।
प्रसादयामास पुनर्मारीचो भगवान् पुनः ॥ ४०३ ॥

कश्यप उवाच ।

वितस्ताख्या सरिद्रूपा देवी त्वं पर्वतात्मजे ।
तपस्विनी परासिद्धिः[10] शर्वपत्न्यासि नो नदी ॥ ४०४ ॥

---

१ मता A. २ Line 3 not in A, C, D. ३ स प्रयाग समो देशः C, D. ४ कश्मीरायां C, D. ५ Line 10 not in C, D. ६ सिन्धुगा C, D. ७ पाटितात् सा C, D. ८ Line 19 not in C, D. ९ Lines 21–24 not in C, D. १० शर्वात् C.

अद्रिवत्सासि भद्रं ते तद्देहोत्संगिनी नदी।
शम्भुनोढासि रुद्राणि स्रवन्त्यसि मयार्थिता ॥ ४०५ ॥
तैरर्पितशरीरा ये पापिष्ठाः स्वर्गता अपि।
दृष्ट्वा रमन्ते स्वदेहमुह्यमानं तवोर्मिभिः ॥ ४०६ ॥
गता नरा विस्मयन्ते दृष्ट्वा तं देहमात्मनः।
स्वर्गताः सोऽथ च मायां क्रीडामो जलमध्यगा ॥ ४०७ ॥
तवोद्गारैस्तरङ्गाढ्यैर्देवि मारुतचोदितैः।
शीतैः शीकरजैर्नृणां नारकोऽग्निः प्रशाम्यति ॥ ४०८ ॥
प्रदोपादीरिभिर्देवि तथावर्तिभिरूर्मिभिः।
त्रिसप्त नारकं वह्निः नृणां शमयसेऽद्रिजे ॥ ४०९ ॥
स्नानं ये तु करिष्यन्ति तव पुण्ये नरा जले।
ब्रह्मलोकं गमिष्यन्ति महापातकिनोऽपि ते ॥ ४१० ॥
यामी च यातनां घोरां भ्रुकुटीभंगचोदिताम्।
पश्यन्ति ते न स्वप्नेऽपि येप्सु स्नान्ति सकृत्तव ॥ ४११ ॥
तव भक्तस्य विप्रस्य नित्यं कर्मानुतिष्ठतः।
मोक्षदं मुनयः स्नानं गंगायाः स्वर्गदं विदुः ॥ ४१२ ॥
अतिप्रभावयुक्ताऽसि त्रैलोक्यस्यापि पावने।
जनित्री सर्वदेवानामुमादेव्यसि नो नदी ॥ ४१३ ॥
देवानां त्वं धृतिर्देवी देवानां भारती तथा।
तृप्तिश्च सर्वभूतानां निम्नगे त्वं सदा भुवि ॥ ४१४ ॥
प्रसादं कुरु मे देवि निर्गच्छ भुवनार्दितः।
अविक्षुब्धेन मनसा देशस्यास्य हिते रताः ॥ ४१५ ॥
अर्धं देहाद्धरस्य त्वं देवपत्न्यसि नो नदी।
सिन्धुसंगमनं यावद्भावैर्मानेह मेऽर्थिता ॥ ४१६ ॥
पतिस्ते शंकरस्त्वेको नापरोऽभ्यर्थितस्ततः।
सिन्धुसंगमनेनाशु व्रजस्व स्वपतिं शिवम् ॥ ४१७ ॥
निशम्यैवं पुनर्देवी संस्मारोक्तं यथा स्वयम्।
स्मित्वा सोत्कण्ठिता भर्तुर्गमने मतिमाददे ॥ ४१८ ॥

---

१ मयार्थिनः A; चयार्थिता C. २ महिमानं A, B. ३ विस्मयं ते नराः जग्मुः C, D. ४ नारकीं C. ५ तव.........गमिष्यन्ति not in D. ६ चोदिताः D. ७ स्नाताप्सु स कृत्तव D; स्नात्यप्सु C. ८ शुद्धस्य D. ९ गंगायाः D. १० भावती याहि C. ११ संस्मरोऽयं D. १२ स्मृता D, C. १३ तस्य D, C.

ततो वेगेन महता सीमन्तमिव कुर्वती।
हिमाचलस्य प्रययौ तोयशैलोपमा नदी॥ ४१९॥
ततस्तु संगता देव्या कृष्णया सह पार्थिव।
तथा सरिद्वराभिश्च शतशोऽथ सहस्रशः॥ ४२०॥
स्वैराजिकानां मध्येन मात्राणां चैव भागशः।
भोगप्रस्थमतिक्रम्य गंगया सह संगता॥ ४२१॥
एषाऽसौ पापशमनी वितस्ता निम्नगोत्तमा।
कश्यपस्य तु वाक्येन लक्ष्म्या सह गता क्षितिम्॥ ४२२॥
अदितिश्च दितिश्चैव शची च मनुजेश्वर।
तपनस्य सुता या च या च गंगा सरिद्वरा॥ ४२३॥

इति नीलमते वितस्ताजन्मवर्णनम्॥

बृहदश्व उवाच।

एवं वसन्तु[2] प्रययौ कश्मीरेषु[3] चतुर्युगाः[4]।
पूर्णे चतुर्युगे तस्मिन् कृत्वा धान्यादि संग्रहम्॥ ४२४॥
अश्वयुज्यामतीतायां निर्ययुर्मानवा[5] बहिः।
काश्यपश्चन्द्रदेवाख्यो वृद्धो ब्राह्मणपुंगवः॥ ४२५॥
न निर्जगाम निर्वेदाच्चोदितोऽर्थेन भाविना।
क्रीडा निमित्तं च भयान्निकुम्भस्य न यातितः॥ ४२६॥
ब्राह्मणेन[6] पिशाचास्तु[7] चिक्रीडुस्[8]तेन ते तदा।
रज्जुबद्धेन[9] तु यथा पक्षिणा नृपदारकाः॥ ४२७॥
कल्यमानाः[10] (?) पिशाचैस्तु निर्वेदं परमं ययौ॥ ४२८॥
हिमेन शीतेन तथा पिशाचैः संपीड्यमानो द्विजवृद्धवर्यः।
बभ्राम तत्रैव विमूढचेता भ्रमन्ययौ यत्र स नागराजः॥ ४२९॥

[11]इति नीलमते चन्द्रदेवब्राह्मणनीलसमागम वर्णनम्॥

यस्मिन्देशे त्वनन्तेन हलं पूर्वं निवेशितम्।
तत्र नीलस्य वसतिः पूर्वमेव सुभाविता॥ ४३०॥
एतस्मिन्नेव काले तु नीलो नागपतिर्विभुः।
सेव्यमानो निकुम्भेन पिशाचेन महात्मना॥ ४३१॥

---

१ हि C, D. २ वसन्त्यां C, D, E. ३ कश्मीरायां C, D, ४ चतुर्युगं C. ५ दानवाः C. ६ ब्राह्मणोसौ A, B. ७ पिशाचौस्तु A, B, C, E. ८ चिक्रीडे A, B, C, D. ९ बन्धेन A, D, E. १० कल्प्यमानाः C. ११ Line 24 not in C.

नागैश्चात्युल्वणैर्भीमैः पर्यंकवरमाश्रितः ।
आस्ते[1] गिरिवरस्या[2]धो धनदस्य महात्मनः ॥ ४३२ ॥
नागा[3]स्तु नागराजानं नागकन्याश्च भूरिशः ।
उपासन्त महात्मानं क[4]श्मीरेषु कृतालयाः ॥ ४३३ ॥
केचित्स्तुवन्ति राजानं केचि[5]द्वीजन्ति पन्नगाः ।
केचिद्व[6]रासनगतं प[7]र्युपासन्त धार्मिकम् ॥ ४३४ ॥
तेषां मध्ये गतं नीलं नीलाञ्जनचयोपमम् ।
मुकुटेना[8]र्कवर्णेन कुण्डलैश्च विराजितम् ॥ ४३५ ॥
विद्युतो द्योतवर्णेन वाससैकेन शोभितम् ।
चन्द्ररश्मिनिकाशेन तथा चीनांशुकेन च ॥ ४३६ ॥
वितानेन विचित्रेण किङ्किणीजालमालिना ।
तथा फणशतैर्भीमैः सप्तभिः सं[9]विराजितम् ॥ ४३७ ॥
रत्नोज्ज्वलैर्दीपवरैर्ज्वालामालासमाकुलम् ।
तं दृष्ट्वा चन्द्रदेवस्य नीलोऽयं भुजगेश्वरः ॥ ४३८ ॥
[10]कश्मीरपालको नागः राजा कश्यपनन्दनः ।
[11]नूनं स एष नीलोऽस्ति मतिरित्थमभूत्किल ॥ ४३९ ॥
चन्द्रदेवस्य विप्रस्य कश्यपान्वयशोभिनः ।
ततः प्रसादात्तस्यैव भुजगाधिपतिः प्रभुः ॥ ४४० ॥ (?)
[12]सोऽपसर्प्य द्विजो नागं कृत्वा प्र[13]क्रमणं पुरः ।
जानुभ्यामवनिं गत्वा तदा स्तोत्रमुदैरयत् ॥ ४४१ ॥

इति नीलमते चन्द्रदेवस्य नीलप्रत्यभिज्ञाव[14]र्णनम् ॥

चन्द्रदेव उवाच ।

[15]नमस्ते नागराजेन्द्र नील नीलोत्पलद्युते ।
नीलमेघचयप्रख्य नीलतोलकृतालय ॥ ४४२ ॥
फणानां त्वं शतैर्नाग शोभसे सप्तभिः सदा ।
सप्तसप्तिरिवार्चिस्माभ्राजसे त्वं गभस्तिभिः ॥ ४४३ ॥

---

१ अस्ति B. २ आदौ B. ३ नागास्ते C. ४ कश्मीरायां C. ५ सेवन्ति D. यजन्ति भूरिशः A, B, C. ६ वरासनगताः C. ७ पर्युपासन्ति C, D. ८ कुण्डलैश्च ......वर्णेण not in D. ९ तं C. १० Lines 15–17 not in C, D. ११ ततः A, B. १२ उपसर्प्य C, D. १३ प्रख्यापनम् C, D. १४ दर्शनम् C, D. १५ नमोस्तु A.

त्वं नील नीलाभ विनीतपापैर्देवेश देवैरपि नेड्यसे[1] त्वम्[2] ।
नागेन्द्र भोगीन्द्र इवाम्बरस्थो[3] ध्यानेन विद्वद्भिरपीह्यमानः ॥४४४॥
त्वं नील योगेश[4] इवासनस्थो वेदार्थविद्भिर्विविधैर्विधानैः ।
संसार[5]कार्येषु सुरायकद्भिराराध्यसे मोक्षफलाय[6] विप्रैः ॥४४५॥
नागेश[7] नीलार्चिरिवामरेशैर्विज्ञायसे सूर्य इवाम्बरस्थः ।
त्वं नील नीलार्चिरिवोज्ज्वलश्च सुभक्त[8]कार्याणि विधास्यमानः॥४४६
दृष्टो[9] मया कारणमेव देव भूमौस्वकाशात्पतता बलेन (?) ।
स्मृतोऽर्चितो मोचय मेऽतिदुःखात्त्रायस्व मां भोगिपते नमस्ते ॥४४७
त्वं नील [10]नीरौघचयप्रकाशो विरौ[11]जसे विष्णुरिवामरेशः ।
[12]विधिर्विधाता रमसे[13] फणीश त्वां वासुदेवं प्रणतोऽस्मि नित्यम् ॥४४८
त्वां नीलनीलाम्बर नील[14]नेत्र माकाशवत्सर्वगतं सुरेशम् ।
[15]ध्यायन्नरो योऽप्यजितेन्द्रियो वा नागेन्द्र मुच्येत तव प्रसादात् ॥४४९
नील त्वामेव वेदार्थं जगुर्वेदाः सनातनम् ।
देवं[16] बहु मुमुक्षूणां कामिनां चार्थसाधनम् ॥ ४५० ॥
त्वत्प्रकाशं यतो ब्रह्म निर्मलं निष्फलं परम् ।
सूक्ष्मतो व्योमनिर्दिष्टं सर्वगात्रैरकृत्रिमम् ॥ ४५१ ॥
[18]अकिंचनो वदान्यस्त्वमतिसूक्ष्मोऽसि च पृथुः ।
[19]अर्थाश्रयो महार्थस्त्वं स्तव्यस्तस्याक्षरस्य च ॥ ४५२ ॥
कुद्रूः पुत्र सहस्रेण नागराजेन्द्र[20]शोभिता ।
त्वया तु राजतेऽत्यर्थं विष्णुनेवादितिर्यथा ॥ ४५३ ॥
त्वमेव तपसाऽत्यर्थं तथा विद्योतसे प्रभो ।
तोयं[21] हिमं शीकरांश्च तथा मुञ्चसि धार्मिक ॥ ४५४ ॥

---

१ दृश्यते खैः D. २ त्वां A. ३ इवामृताख्यं C, D. ४ यज्ञेश E. ५ संस्कार E. ६ फलाथ A. ७ नागेन्द्र C, D. ८ मुक्तस्य कार्याणि च साधयन्तं C, D. ९ दृष्टं मया हेतुभिरापतन्तं सर्वस्य जन्तोः वससे यतोऽथ । स्मृतस्ततो भक्षयसीति दुःखात् त्रायस्व विप्रस्य नमो नरेन्द्र ॥ C, D. १० नीरोग C. ११ विडौजसे C, D. १२ विधेः C, E. १३ अमी अमेयमीशं C, D. विधेर्विधातारममेयमीशं त्वां वासुदेवः प्रणतः सदैव. E. १४ नेत्र C, D. १५ दत्त्वा C, D. १६ ध्येयं E. १७ येन C, D. १८ अकिञ्चिद्यद्वस्तु त्वमपि सूक्ष्मस्य नो पथि D. १९ अर्थाश्रयात् C, D. २० जेन A, B. २१ Lines 22 & 1st of page 38 not in C, D.

प्रजापतिः कश्यपो हि सर्वभूतपिता प्रभुः ।
त्वया तु शोभतेऽत्यर्थं पुत्रेणात्यन्तधार्मिकः ॥ ४५५ ॥
त्वयि धर्मश्च सत्यं च क्षमा च सततं प्रभो ।
देवासुरविमर्देषु शतशोऽथ सहस्रशः ॥ ४५६ ॥
त्वया विनिहता दैत्या देवब्राह्मणकण्टकाः ।
वरदस्त्वं वरेण्यश्च [1]बलारिर्बलहा विभुः ॥ ४५७ ॥
भक्तानुकम्पी भक्तश्च देव देवे जनार्दने ।
तस्यातिदयितश्चासि यथा नागः स वासुकिः ॥ ४५८ ॥
धनदस्ते सखा नाग यथा शर्वस्य नित्यदा ।
धनदश्चासि भक्तानां धनेश इति विश्रुतः ॥ ४५९ ॥
नागानां त्वं गतिर्नित्यं देवानामिव वासवः ।
भक्तिमानस्मि ते नित्यं [2]तच्च जानासि धार्मिक ॥ ४६० ॥

इति नीलमते नीलस्तोत्रम् ॥

नील उवाच ।

स्वागतं ते द्विजश्रेष्ठ दिष्ट्या प्राप्तोऽसि मेऽन्तिकम् ।
अर्चनीयोऽसि विप्रेन्द्र [3]अतिथिस्त्वमतो मम ॥ ४६१ ॥
वरं वरय भद्रं ते यथेष्टं मनसि प्रियम् ।
गृहं च मे तथा पश्य तत्रास्स्व च यथासुखम् ॥ ४६२ ॥

चन्द्रदेव उवाच ।

अवश्यं मे वरो देयस्त्वया नागेन्द्रसत्तम ।
वरयामि वरं देव तन्मे त्वं दातुमर्हसि ॥ ४६३ ॥
[4]कश्मीरेषु जनो नित्यं वसतां भीमविक्रम ।
क्लिश्यते हि सदा लोकः निष्क्रामन् प्रविशन् पुनः ॥ ४६४ ॥
गृहानिह नरास्त्यक्त्वा पुराणि विविधानि च ।
[5]गच्छन्ति हिमभीता ये ते वसन्त्विह नागराट् ॥ ४६५ ॥
सदैव सुखिनो नित्यं पुत्रपौत्रसुखान्विताः ।
वसन्तु त्वत्प्रसादेन [6]वर एषो वृतो मया ॥ ४६६ ॥
एवमस्तु द्विजश्रेष्ठ [7]वसन्त्विह नराः सदा ।
पालयन्तस्तु मद्वाक्यं केशवाद्यन्मया श्रुतम् ॥ ४६७ ॥

---

१ त्वं वारिबलहा D. २ त्वं च C. ३ ह्यतिथि C. ४ कश्मीरायां C, D.
५ Lines 25–26 not in C, D. ६ वरं एतद्वृतं C, D. ७ वसन्त्वत्र D.

[1]इति नीलमते ब्राह्मण वरलाभवर्णनम् ॥

[2]बृहदश्व उवाच ।

एवमुक्त्वा तदा नीलो ब्राह्मणं स्वं निवेशनम् ।
नीत्वा संभोज्य संपूज्य ब्राह्मणं तं[3] यथाविधि ॥ ४६८ ॥
कश्मीरायां वसत्यर्थं सदाचारान् जगाद वै ।
द्विजश्चोवास षण्मासान् सुखं नीलनिवेशने ॥ ४६९ ॥
चैत्र्यां ततो व्यतीतायां प्राविशन् सर्वतो जनाः ।
राजा वीर्योदयाख्यश्च हस्त्यश्वैर्बहुभिर्वृतः ॥ ४७० ॥
[4]प्रविष्टेषु जनौघेषु द्विजो नीलेन योजितः ।
युवा [5]धनौघ[6]संहितो हृष्टचेताः महोज्ज्वलः ॥ ४७१ ॥
[7]आरूढो नाग भुवनादागतः ख्यातिमन्ततः ।
राज्ञा (सं)मृग्यमानोऽसौ ययौ वीर्योदयं नृपम् ॥ ४७२ ॥
तस्य सर्वं यथावृत्तं कथयामास स द्विजः ।
[8]प्रसादं नागराजस्य नीलस्य सुमहात्मनः ॥ ४७३ ॥
निशम्यासौ महीपालः महं कृत्वा शुभोदयम् ।
समुच्छ्रित्य च पौरांश्च विप्रोक्तं सन्यवेदयत् ॥ ४७४ ॥
इत्थं स सर्वलोकेषु कथयित्वा स पार्थिवः ।
विदध्व मिति प्रीत्या तान् कारयामास तन्मतम् ॥ ४७५ ॥

इति नीलमते चन्द्रदेवब्राह्मणनीलसमागमवर्णनम् ॥

बृहदश्व उवाच ।

नीलोक्तं वचनं कुर्वन् ततः प्रभृति वै जनः ।
उवास सततं हृष्टः कश्मीरेषु कृतालयः ॥ ४७६ ॥
कृत्वा पुराणि ग्रामांश्च तीर्थान्यायतनानि च ।
गृहाणि च विचित्राणि [10]चकार वसतिं जनः ॥ ४७७ ॥
[11]तदा प्रभृति देशेऽस्मिन् स्वल्पं निपतति हिमम् ।
[12]जनाश्च नीलवाक्यानि [13]पालयन्तोऽनिशं मुदा ॥ ४७८ ॥

---

१ Line 1 not in C, D. २ Lines 2, 3 not in C. ३ स C, D. ४ प्रविष्टे तु जले तस्मिन् C, D. ५ जनौघ D. ६ सहितं ययौ वीर्योदयं नृपम् C, D. ७ Lines 11, 12 not in C, D. ८ राजाऽपि सर्वलोकेषु प्रथयामास सर्वतः D;......कथयामास पार्थिव C. ९ Lines 14–19 not in C, D. १० उवास C, D. ११ ततः C. १२ जनः C, D. १३ पालयतीव D; पालयन्नेव C.

[1]ऊषुश्च सततं प्रीताः षाण्मासिकज्वरोज्झिताः ।
इति नी० कश्मीरवासे जननिवासवर्णनम् ॥

वैशम्पायन उवाच ।

एवमुक्तः स गोनन्दो बृहदश्वेन [2]भूमिपः ॥ ४७९ ॥
पप्रच्छ भूयस्तमृषिं जातकौतूहलस्तदा ।

गोनन्द उवाच ।

[3]के आचाराश्च नीलेन चन्द्रदेवाय भार्गव ॥ ४८० ॥
[4]पुरा प्रोक्ताश्च तान् मह्यं कथयस्व [5]महामते ।

बृहदश्व उवाच ।

[6]रौक्मपीठस्थितं विप्रं[7] नागः पर्य[8]कमास्थितः ॥ ४८१ ॥
उवाच यत्तदा राजन् तच्छृणुष्व समाहितः ।

नील उवाच ।

प्रणिपत्य हृषीकेशं पराशरगुरुं हरिम् ॥ ४८२ ॥
[9]कश्मीरायां वसत्यर्थं वक्ष्याम्याचरणं तव ।
अश्वयुज्यां निकुम्भस्तु नित्यमायाति कश्यप ॥ ४८३ ॥
हत्वा पिशाचान् संग्रामे वालुकार्णवगान् [10]बहून् ।
पूजार्थं तस्य कर्तव्या कौमुदी तां निबोधत ॥ ४८४ ॥
[11]सदावदाताः कर्तव्याः पूजिताश्च तथा गृहाः ।
पुंभिः स्नातानुलिप्ताश्च भाव्यं बालैर्विशेषतः ॥ ४८५ ॥
न भोक्तव्यं दिवा चापि [12]तद्दिनं पुरुषैः सदा ।
केवलं भोजनं देयं बालातुरजनस्य च ॥ ४८६ ॥
[13]सत्फलैः पत्रसंघातैः पूजनीया[14]स्तथा गृहाः ।
चन्द्रोदये तथा प्राप्ते संप्रज्वाल्य हुताशनम् ॥ ४८७ ॥
रुद्रं चन्द्रमुमां स्कन्दं नासत्यौ नन्दिनं तथा ।
[15]पूजयेत च सन्माल्यैः नैवेद्यैश्च पृथक् पृथक् ॥ ४८८ ॥
ततः पूजा निकुम्भस्य कर्तव्या [16]कुंषरेण तु ।
आदित्यपुत्रो रेवन्तः साश्वः पूज्यश्च मानवैः ॥ ४८९ ॥

---

१ Lines 1, 2 not in C, D. २ भूभुजा C. ३ कान्याचाराणि C. ४ पुरः प्रोक्तानि चैतानि C. ५ महाद्युतिः D. ६ रौक्मं पीठं स्थितो C. ७ क्षिप्रं A, B, C, D. ८ आश्रितः C. ९ कश्मीराणां D. १० बलात् D. ११ सुधावदाताः C. १२ तद्दिने D. १३ सफलैः C. १४ तदा C. १५ पूजनीयार्घमाल्यादि D; पूजयित्वा C. १६ वासरेण D.

पूजनीया[1] च सुरभिर्गोमद्भिः पुरुषैस्तथा ।
येषां च छागलाः[2] सन्ति तैश्च पूज्यो हुताशनः ॥ ४९० ॥
औरभ्रकैस्[3]तथा देव पूजनीयो जलाधिपः ।
येषां सन्ति करीन्द्राश्च तैश्च पूज्यो गणाधिपः ॥ ४९१ ॥
कृता[4]ग्निहवनं पश्चात्पूजयित्वा द्विजोत्तमान् ।
प्रयोज्य चात्मनः पूजां भोक्तव्यं मांसवर्जितम् ॥ ४९२ ॥
सार्धं मित्रैस्तथा भृत्यैः दारापत्यादिभिस्तथा ।
वस्तव्या च निशा सैव वह्निपार्श्वगतैर्नरैः[5] ॥ ४९३ ॥
शंखवादरवोन्मिश्रैर्गीतवाद्यैश्च सर्वशः ।
नेया भवति राजेन्द्र तथा प्रेक्षणकैः शुभैः ॥ ४९४ ॥
तथा प्रभातसमये स्नानुलिप्तैः स्वलंकृतैः ।
वह्निपूजा च कर्तव्या मङ्गलालम्भनं[6] तथा ॥ ४९५ ॥
भोक्तव्यं सह मित्रैश्च क्रीडितव्यं यथासुखम् ।
सुप्तव्यं च तथा तस्यां[7] द्वितीयस्यां निशीच्छया ॥ ४९६ ॥
कर्दमेनानुलिप्तांगैः क्रीडितव्यं तथादरात्[8] ।
सुहृदः कर्दमेनापि लेपनीया[9] इतस्ततः ॥ ४९७ ॥
कामार्थवादिनरैस्[10]तैस्तैर्लिङ्गार्थप्रबोधकैः ।
गन्तृ[11]गम्यविशेषैश्च विविधैश्च सुभाषितैः ॥ ४९८ ॥
अश्लीलानि[12] वदद्भिश्च तथा क्रोशद्भिरेव च ।
तस्मिन्नहनि पूर्वाह्णे निकुम्भस्यानुयायिनः ॥ ४९९ ॥
आविशन्ति नरान् सर्वान् पिशाचाः[13] घोरदर्शनाः ।
यश्चैवं[14] कुरुते तस्य ह्यपराह्णे तदा तनुम् ॥ ५०० ॥
त्यक्त्वा स्नातस्य गच्छन्ति शपन्ति चाप्यकारणम्[15] ।
ततः स्नातैश्च कर्तव्यं केशवस्यार्चनं नरैः ॥ ५०१ ॥
संपूज्य विप्रान् भोक्तव्यं लिप्तदेहैः[16] स्वलंकृतैः ।
मित्रानुजीविभिः सार्धं दारापत्यसमन्वितम्[17] ॥ ५०२ ॥

१ पूजनीयाश्च मुनिभिः A, B, C, D. २ वृषभाः D. ३ तौरात्रिकैः C. ४ कृत्वा C. ५ तरैः C,D. ६ मङ्गलालवणं C. D. मङ्गलालभनं E. ७ रात्रिं द्वितीयायामनन्तरं C. D. ८ वरात् A; नरैः C. D. ९ लेप यद्भिः C, D. १० वादिभिः सर्वैः C,D. ११ भर्तृ C. १२ अश्लीलं वदमानैश्च C. D. १३ पिशाचान् A. १४ यश्चैनं D. १५ करुणवधुम् A. B. १६ तनुलिप्तैः सुसंयतैः C. D. १७ दारापत्यादिभिस्तथा C, D.

ततः प्रभृति षण्मासान् शेषवेश्मसु मानवैः ।
अग्निः सन्निहितः कार्यो रात्रौ विप्रविशेषतः ॥ ५०३ ॥
रात्रौ दीपश्च दातव्यो मासमेकं बहिर्गृहात् ।
यावत्कार्तिकमासस्य पौर्णमासी द्विजोत्तम ॥ ५०४ ॥
एषा तु कौमुदी नाम तिथिः कार्या शुभप्रदा ।

इति नी० अश्वयुजि महः वर्णनम् ॥

तथा पक्षे व्यतीते तु कर्तव्या सुखसुप्तिका ॥ ५०५ ॥
पञ्चदश्यां यथा विप्र तथा मे गदतः शृणु ।
तस्यां दिवा न भोक्तव्यं बालातुरजनं विना ॥ ५०६ ॥
सूर्ये त्वस्तमनुप्राप्ते पूजयित्वा करीषिणीम् ।
दीपवृक्षास्ततो देयाः देवतायतनेषु च ॥ ५०७ ॥
चतुष्पथश्मशानेषु नदीपर्वतवेश्मसु ।
वृक्षमूलेषु गोष्ठेषु चत्वरेष्वापणेषु च ॥ ५०८ ॥
वस्त्रैश्चैवापणाः सर्वे कर्तव्याश्चोपशोभिताः ।
दीपमालापरिक्षिप्ते प्रदेशे तदनन्तरम् ॥ ५०९ ॥
स्वलंकृतैश्च भोक्तव्यं द्विजेन्द्र नववाससा ।
सुहृद्भिर्ब्राह्मणैः सार्धं बन्धुभिश्चानुयायिभिः ॥ ५१० ॥
ततः प्राप्ते द्वितीयेऽह्नि स्वनुलिप्तैः स्वलंकृतैः ।
क्रीडितव्यं तथा द्यूतैः श्रोतव्यं गीतवादितम् ॥ ५११ ॥
विशेषवच्च भोक्तव्यं पूर्वोक्तैस्तैर्जनैः सह ।
तस्मिन् द्यूते जयो यस्य तस्य संवत्सरः शुभः ॥ ५१२ ॥
तस्यां रात्रौ तु कर्तव्यं शय्यास्थानं सुशोभितम् ।
गन्धैर्वस्त्रैस्तथा धूपैः रत्नैश्चैवाभिलङ्कृतम् ॥ ५१३ ॥
दीपमालापरिक्षिप्तं तथा धूपेन धूपितम् ।
दयिताभिश्च सहितैस्तैर्नेया सा निशा भवेत् ॥ ५१४ ॥
पूज्या नूतनवासोभिः सुहृत्संबन्धिबान्धवाः ।
ब्राह्मणा भृत्यवर्गाश्च चन्द्रदेव यथाविधि ॥ ५१५ ॥

॥ इति नी० कार्तिकामायां दीपमाला वर्णनम् ॥

---

१ निकुम्भपूजावर्णनं C, D. २ पूज्याः C, D. ३ द्विज C, D. ४–तेन C. ५ यथा C, D. ६ श्राप्यत्य A, B. ७ Line 28 does not occur in C.

नील उवाच ।

एकादश्यां ततो रात्रौ शुक्लपक्षस्य मानवः ।
सोपवासो हरिं देवं [1]नृत्यगीतैर्वि[2]बोधयेत् ॥ ५१६ ॥
आषाढमासे प्रतिमां केशवस्य तु कारयेत् ।
[3]सुप्तां च शेषपर्यंके शैलमृद्धेमदारुभिः ॥ ५१७ ॥
ताम्रारकूटरजतैः चि[4]त्रे वापि निवेशयेत् ।
लक्ष्म्युत्संगगतौ पादौ तस्यां तस्य च कारयेत् ॥ ५१८ ॥
कार्तिकस्य तु शुक्लान्ते कार्यं तस्य विबो[5]धनम् ।
यथा तथा मे गदतः शृणु त्वं [6]वाडवोत्तम ॥ ५१९ ॥
एकादश्यां तु कर्तव्यं रात्रौ जागरणं तथा ।
गीतैर्नृत्यैस्तथा [7]वाद्यैः ब्रह्मघोषैस्तथैव च ॥ ५२० ॥
वीणापटहशब्दैश्च पुराणानां च वाचनैः ।
तत्कथाश्रवणैश्चान्यैस्तथा स्तोत्रोपकीर्तनैः ॥ ५२१ ॥
प्रेक्षणीयैः प्रदानैश्च भूमिशोभाभिरेव च ।
पुष्पधूपप्रदानैश्च नैवेद्यैर्विविधैस्तथा ॥ ५२२ ॥
दीपवृक्षैश्च विविधैर्वह्निपूजाभिरेव च ।
भक्ष्यैरपूपैः शाकैश्च परमान्नैः फलैस्तथा ॥ ५२३ ॥
इक्षोर्विकारैः मधुना मृद्वीकाभव्यदाडिमैः ।
कुटीरकस्य मञ्जर्या मार्जन्या लवणेन च ॥ ५२४ ॥
रक्तसूत्रेण रक्तेन चन्दनेन सितेन च ।
अलक्तकेन बीजैश्च कुङ्कुमेन सुगन्धिना ॥ ५२५ ॥
संपूज्य प्रतिमां रात्रौ द्वितीयेऽहनि पंडितः ।
स्नात्वा नदीजले पुण्ये प्रतिमां [8]स्थापयेत् शुभाम् ॥ ५२६ ॥
उत्थितां तां परां ब्रह्मन् [9][10]पूर्वद्रव्यैर्विनिर्मिताम् ।
यदि चित्रनिविष्टा स्यात् प्रतिमा ब्राह्मणोत्तम ॥ ५२७ ॥
[11]तस्यां स्नानादि कर्तव्यं बुधैश्चित्तोपचारतः ।
पञ्चरात्रविधानेन वेद्यामावाहितां बुधः ॥ ५२८ ॥

---

१ नृप A, B. २ विरोधयेत् A. ३ Lines 5–7 not in D. ४ चैत्र A, B. ५ निबोधनम् C. ६ मुनिपुङ्गव C, D. ७ नाट्यैः D. ८ प्रापयेत् C, D. ९. च D; तु C. १० द्रव्यैः A, B, C, D. ११ Line 26 not in C, D.

आसनस्थां यथाशक्ति स्नापयेत यथाविधि ।
आदौ आज्येन तैलेन मधुना तदनन्तरम् ॥ ५२९ ॥
दध्ना क्षीरेण च ततः पञ्चगव्येन चाप्यथ ।
उद्वर्तनं ततो देयं माषचूर्णैरतः परम् ॥ ५३० ॥
ततो मसूरचूर्णैश्च ततस्त्वामलकाणुभिः ।
रुद्रकालेलकुष्ठैश्च तगरैः कर्णकैस्तथा ॥ ५३१ ॥
प्रियङ्गुभिश्च सिद्धार्थैस्ततो वै बीजपूरकैः ।
सर्वौषधिसर्वगन्धैः सर्वबीजैश्च काञ्चनैः ॥ ५३२ ॥
राजतैर्मौक्तिकैश्चापि नानारत्नाम्बुभिस्तथा ।
ततोऽपि मतिमान् देव प्रीत्यर्थं तं तदानयेत् ॥ ५३३ ॥
माङ्गल्यानि यथालाभं रत्नानि च कुशोदकम् ।
दन्तिदन्तोद्धृतामृच्च वृषशृंगोद्धृता तथा ॥ ५३४ ॥
नदीतीरात्संगोस्थानाद्वल्मीकात्संगमाद्ध्रदात् ।
इन्द्रस्थानाच्च सरसः तथा पर्वतमस्तकात् ॥ ५३५ ॥
एतैः संस्नाप्य देवेशं दद्याद्गोरोचनां शुभाम् ।
ततश्च कलशा देया यथाशक्ति स्वलंकृताः ॥ ५३६ ॥
जातिपल्लवसंपूर्णाः फलपूर्णास्तु कांचनाः ।
पुण्याहे वेदशब्देन वेणुवीणारवेन च ॥ ५३७ ॥
सूतमागधशब्देन तथा वन्दिस्वनेन च ।
स्नपयेत बुधः सम्यक् प्रतिमास्थापितं हरिम् ॥ ५३८ ॥
एवं संप्राप्य गोविन्दं स्वनुलिप्तं स्वलंकृतम् ।
सवाससं पूजयेत जातीपुष्पैः सकुड्मलैः ॥ ५३९ ॥
धूपं च सरजो देयात् दद्याद्दीपंसुशोभनम् ।
ततश्च पूजयेत् देवं परमान्नैः सुशोभनैः ॥ ५४० ॥
अन्नैः प्रधानरत्नैश्च पूज्याः भागवतास्तथा ।
ततोऽग्निहवनं कार्य्यं विप्राः पूज्यास्त्वनन्तरम् ॥ ५४१ ॥

---

१ यथाशक्त्या C. २ मासचूर्णं C. ३ चूर्णं तु D. ४—मलकानि च C. ५ रोध्रं कालेयकं चैव तगरं कर्णकं C. ६ सर्वबीजैश्चकांचनैः C. ७ Line 8 not in A. ८ Lines 9, 10 not in C. D. ९ पत्राणि C. D. १० फलमूलाश्च A, B. ११ Line 20 not in C. D. १२ संस्नाप्य C. १३ देयं C. D. १४ सान्नरत्नप्रधानैश्च C. D.

वासोभिर्भूषणैः रत्नैः गोभिरश्वैः गजैः धनैः ।
यथाविभवतो विप्र भोक्तव्यं तदनन्तरम् ॥ ५४२ ॥
त्रयोदश्यां ततः पूज्या जना ये रङ्गजीविनः ।
[1]मल्लभट्टादयो ब्रह्मन् स्वस्वचित्तानुरूपतः ॥ ५४३ ॥
चतुर्दश्यां न भोक्तव्यं भोक्तव्यं पयसाऽपिवा ।
पञ्चदश्यां तथा पूज्यो देवदेवो जनार्दनः ॥ ५४४ ॥
पौर्णमासीं तु संप्राप्य न भोक्तव्यं तदा[2] दिवा ।
ततश्चन्द्रोदये प्राप्ते पूजनीयाश्च कृत्तिकाः ॥ ५४५ ॥
कार्तिकेयं तथा खड्गं वरुणं च हुताशनम् ।
माल्यैः गन्धै स्तथा धूपैः भक्ष्यै रुच्चावचै स्तथा ॥ ५४६ ॥
परमान्नै स्तथा शाकै [3]वह्निसंतर्पणैस्तथा ।
इक्षूणां च विकारैश्च दीपवृत्तैः सुशोभनैः ॥ ५४७ ॥
कल्माषैः लपिकाभिश्च [4]द्विजांश्च परिपूजयेत् ।
एवं कृत्वा तदा पूजां मासदत्तं तु दीपकम् ॥ ५४८ ॥
बहिर्गृहान्तु यद्दत्तं पिटकं तत्तु कारयेत् ।
अपां [5][6]समीपे नीत्वा तु सभक्ष्यं तत्र [7]वाहयेत् ॥ ५४९ ॥
तस्य मूले तु कर्तव्यं ततोवै चन्दनार्चनम् ।
क्षीरेण पूर्णतं कृत्वा कुर्यान्[8]मत्स्यं च सैकतम् ॥ ५५० ॥
मुक्तानेत्रं [9]न्यसेत्तस्मिन् तं च विप्रे निवेदयेत् ।
बलीवर्दं ततो दद्यात् श्वेतं शक्त्या विशेषतः ॥ ५५१ ॥
सर्वसस्यधरं रम्यं सर्वगन्धसमन्वितम् ।
सवाससं द्विजे दद्यात् [10]कान्तारे यो[11]ऽवतिष्ठति ॥ ५५२ ॥
याम्यं मार्गं [12]सुखेनैव तेन यान्ति विपश्चिताः ।
यावन्ति रोमकूपाणि तस्य [13]दानस्य काश्यप ॥ ५५३ ॥
तावद्वर्षसहस्राणि स्वर्गे मोदन्ति तत्प्रदाः ।
पूजयित्वा ततो विष्णुं रक्तमाल्यादिभिः स्वयम् ॥ ५५४ ॥
भोक्तव्यं गोरसप्रायं सुप्तव्यं चाप्यनन्तरम् ।
देवोत्थापनमेतद्धि कर्तव्यं दिनपञ्चकम् ॥ ५५५ ॥

---

१ नटमल्लादयः D; मल्लमल्लादयः C. २ तथा C. ३ हवनैरतर्पणैस्तथा D. ४ द्विजा-नां परिपूजनैः C. D. ५ निकटे D. ६ समीपं A. ७ तु प्रवाहयेत् C. ८ मत्स्यं तु सिकतामयं D. ९ तु न्यसेत C.D. १० कर्त्तारं C. D. ११ सोपतिष्ठति C.D. १२ हिकान्तारं C. D. १३ दत्तस्य C.

पञ्चाहमेतच्च तथा सुप्तव्यं स्थण्डिले बुधैः ।
दिने दिने च स्नातव्यं नदीतोये सुशीतले ॥ ५५६ ॥
पूजनीयो हरिर्देवो ब्राह्मणाः [1]सहुताशनाः ।
[2]वर्जनीयं तदा मांसं प्रयत्नादपि काश्यप ॥ ५५७ ॥
दैत्यदानवयक्षाश्च पिशाचाः राक्षसैः सह ।
वर्जयन्ति च ते मांसं मासादा दिनपञ्चकम् ॥ ५५८ ॥
एवं संपूज्य देवेशं सर्वकामसमन्वितम् ।
आयुः[3] परममासाद्य विष्णुलोके महीयते ॥ ५५९ ॥
स्ववित्तशक्त्या कर्तव्यं अप्युक्तं नूनमेव तु ।
प्राप्नोतीदं फलं सर्वं वित्तशाठ्यं विवर्जयेत् ॥ ५६० ॥

इति नी० कार्त्तिकपञ्चरात्रे देवतोत्थापनम् ॥

नील उवाच ।

कार्तिक्यां समतीतायां संप्राप्ते प्रथमेऽहनि ।
कश्मीरा निर्मिताः पूर्वं कश्यपेन महात्मना ॥ ५६१ ॥
तस्मात् तत्र दिने कार्य उत्सवस्[4]तत्र मानवैः ।
[5]स्वाशितैः स्वनुलिप्ताङ्गैः सुचित्तैः सुजनावृतैः ॥ ५६२ ॥
श्रोतव्यं गीतवाद्यादि[6] तथा सेव्यं[7] च मङ्गलम् ।
पानं च पानपैः पेयं वस्त्रं धार्यं तथा नवम् ॥ ५६३ ॥

इति नीलमते नवसंवत्सर[8]महोत्सवकथनम् ॥

नील उवाच ।

तस्यातितोषमा[9]याति सगणो भास्करः स्वयम् ।
यो[10] मार्गशीर्षसप्तम्यां मित्रनाम्नार्कमर्चयेत् ॥ ५६४ ॥
अदित्यां कश्यपाज्जज्ञे मित्रनामात्र भास्करः ।
षष्ठ्यां च स्थापनं कार्यं भानोर्मित्राह्वयस्य च ॥ ५६५ ॥
[11]रथचक्राकृतौ रम्ये मण्डले सर्वकामदम् ।
भक्ष्यैः भोज्यैस्तथा पेयैः पुष्पैर्धूपानुलेपनैः ॥ ५६६ ॥
तत्रोपवासः कर्तव्यो भक्ष्याणि च फलान्यपि ।
रात्रौ जागरणं कार्यं गीतनृत्यपुरस्सरम् ॥ ५६७ ॥

---

१ सहुता C. २ Lines 4, 5 not in C. D. ३ आयुषः परं C. D. ४ सर्व C. D. ५ सुसितैः A. B. C. D. ६ गीतवाद्यानि C. ७ दिव्यं D. ८ प्रवेश C. D. ९ आयातः A. B. १० Lines 22 to 5 of Page 47 not in C. D. ११ रथम् A.

नानाकुसुमसम्भारैर्भक्ष्यैः पिष्टमयैः शुभैः ।
मधुना च प्रभूतेन होमजप्यसमाधिभिः ॥ ५६८ ॥
ब्राह्मणान् भोजयेत् पश्चात् दीनानाथान् च मानवान्[1] ।
अष्टम्यां संविभाज्याश्च मित्रार्थेनटनर्तकाः ॥ ५६९ ॥
दिनद्वये च भोक्तव्यं पिष्टमन्नं मधुप्लुतम् ।

इति नी० मार्गशीर्षसप्तमीवर्णनम् ॥

एष एव विधिः कार्यः सप्तम्यां[2] तपसस्तथा ॥ ५७० ॥
आषाढस्य[3] च सप्तम्यामेष विजयकांक्षिभिः ।
सप्तमीत्रितयं चैव श्रुतमेतद्द्विजोत्तमः[4] ॥ ५७१ ॥
सप्तमीष्वथ सर्वासु कुर्वन्[5] पूजां विशेषतः ।
वर्षं यावन्महीपाल सूर्यलोके महीयते ॥ ५७२ ॥[6]

इति[7] नी० सप्तमीवर्णनम् ॥

नील उवाच ।

पूर्णमासी तु तां प्राप्य मार्गशीर्षस्य मानवः ।
नक्ताशी पूजयेच्चन्द्रं शुक्लमाल्यादिभिर्गृही[8] ॥ ५७३ ॥
अन्यैः भक्ष्यप्रकारैश्च धूपदीपैस्तथा फलैः ।
लवणानां प्रदानैश्च[9] वह्निपूजाभिरेव च ॥ ५७४ ॥
पूजनैर्ब्राह्मणानां च सुभगानां तथैव च ।
रक्तवस्त्रयुगं देयं सुभगा ब्राह्मणी तु या ॥ ५७५ ॥
स्वसा पितृष्वसा या च मित्रपत्नी च या भवेत् ।
तां[10] समानीय भक्त्या च पूजां कृत्वा विधानतः ॥ ५७६ ॥
अर्पयेद्वस्त्रयुग्मं च दक्षिणासहितं शुभम् ।
भवेमेषा[11] च कर्तव्या पौर्णमासी विचक्षणैः ॥ ५७७ ॥
कार्याश्चान्याः स्वशक्त्या वा नवा कार्या द्विजोत्तम ।
कान्तं[12] रूपमवाप्नोति; सौभाग्यं विपुलं स्त्रियः[13] ॥ ५७८ ॥
स्त्रीभिर्विशेषतः कार्याः पूर्णमास्यः द्विजोत्तम[14] ।

इति नी० पौर्णमासी[15]वर्णनम् ॥

---

१ मानवाः B. २ तथा मायस्य सप्तमीम् C, D. ३ आषाढ सप्तमी चैव C, D. ४ विशेषतः A. B. ५ कुर्वन्...महीपाल not in C, D. ६ Line 12 not in D. ७ सप्तम्याः C. ८ तथा C, D. ९ दीपदानैः C, D. १० Lines 21, 22 not in C, D. ११ मेवं तु C. १२ श्रियः A. १३ कार्यं D. १४ तथा द्विज C, D. १५ पौर्णमास्याः D.

नील उवाच ।

यस्मिंस्तु वासरे विप्र पतेच्च[1] प्रथमं हिमम् ॥ ५७९ ॥
तत्र पूज्यस्तु[2] हिमवान् हेमन्तशिशिरावुभौ ।
मम पूजा च कर्तव्या स्नानं नागस्य चाप्यथ[3] ॥ ५८० ॥
फलपुष्पे[4] प्रदातव्ये नमेरुप्रभवे[5] तथा ।
बकपुष्पाणि देयानि धूपो[6] गुग्गुलजः शुभः ॥ ५८१ ॥
बलिः कार्या प्रयत्नेन कुल्माषेण द्विजोत्तम ।
कुल्माषभोजनं देयं ब्राह्मणेभ्यो[7] घृतान्वितम् ॥ ५८२ ॥
उत्सवश्च मुदा[8] कार्यो गीतनृत्यसमाकुलैः ।
विशेषतश्च[9] भोक्तव्यं भोजनं च यथेच्छकम् ॥ ५८३ ॥

इति नी० नवहिमपातकार्यवर्णनम् ॥

नील उवाच ।

नवं[10] तु मद्यं पातव्यं मद्यपैः पतिते हिमे ।
श्यामादेवी चैव[11] संपूज्या पुष्पधूपानुलेपनैः ॥ ५८४ ॥
अन्नैः भक्ष्यैः फलैर्मूलैः स्वनुलिप्तैः स्वलंकृतैः ।
हिमोपरिनिविष्टैश्च गुरुप्रवरणाम्बरैः ॥ ५ ५ ॥
मित्रभृत्याप्तसंबन्धिसहितैश्च यथासुखम् ।
भोज्यं विशेषवत्कार्यं श्रोतव्यं गीतवादितम् ॥ ५८६ ॥
द्रष्टव्यं पुंश्चलीनृत्तं पूजनीयास्तथा स्त्रियः ।

इति नी० नवमद्यपानम् ॥

नील उवाच ।

पौषकृष्णाष्टमीश्राद्धं कार्यं शाकैर्द्विजोत्तम ॥ ५८७ ॥
माघस्य कृष्णाष्टम्यां च मांसैः कार्यं[12] यथाविधि ।
फाल्गुनस्य[13] तथाष्टम्यां कृष्णायां विधिवद्बुधः ॥ ५८८ ॥
अपूपैः कारयेद्भक्त्या नित्यमेव समाहितः ।
नवमीषु च तास्वेव स्त्रीणां श्राद्धं तु कारयेत् ॥ ५८९ ॥

---

१ प्रथमं पतते हिमम् C. २. पूज्याः C,D. ३ चास्य तु D. ४ पत्रैः C.D. ५ प्रभवं C, D. ६ नगे मेरूद्भवे C, D. ७ सघृतं भोजनेषु च D. ब्राह्मणेषु च C. ८ सदा C, D. ९ विशेषवत् च C, D. १० नवो मद्यश्च पातव्यः C, D. ११ श्यामादिभिश्च संपूज्याः A, B, D. १२ फाल्गुनस्य सिताष्टमी C. १३ Line 24 not in C.

श्राद्धं कृत्वा प्रयत्नेन ब्रह्मचारी वसेन्निशाम् ।

इति नी० अष्टकात्रयमनष्टकात्रयं च ॥

नील उवाच ।

पौर्णमासी तु पौषस्य पुष्ययुक्ता यदा भवेत् ॥ ५९० ॥
गौरसर्षपकल्केन तदा भूत्सादितो नरः ।
घृतेन स्नपनं कुर्य्यात् स्वशरीरस्य मानवः ॥ ५९१ ॥
ततो विरूक्षितः स्नात्वा सर्वौषधियुतैः घटैः ।
नारायणं तथा शुक्रं सोमं पुष्यबृहस्पती ॥ ५९२ ॥
पूजयित्वार्घ्यमालादिनैवेद्यैश्च पृथक् पृथक् ।
मन्त्रैर्यथोक्तदैवत्यैः कृत्वाग्निहवनं द्विजः ॥ ५९३ ॥
अहताम्बरसंवीतः स्वनुलिप्तः स्वलंकृतः ।
पूजयित्वा धनैर्विप्रान् मङ्गलालम्भपूर्वकम् ॥ ५९४ ॥
घृतपायसमश्नीयात् पूजयित्वा द्विजोत्तम ।
संवीतमहतं कल्ये देयं कालविदे भवेत् ॥ ५९५ ॥
एवं कृत्वा नरः पुष्टं प्राप्नोति धनधान्यभाक् ।
स्नानमेवंविधानेन कर्तव्यं पापनाशनम् ॥ ५९६ ॥

इति नील० पौष्यां पुष्यस्नान वर्णनम् ।

नील उवाच ।

घृतेन स्नपयेद्देवं स्वशक्त्या मधुसूदनम् ।
हरभक्तो हरं देवं यदा स्यादुत्तरायणम् ॥ ५९७ ॥
आज्यं दत्त्वा तथार्चाऽसौ शिलाभिर्या कृता द्विज ।
अर्चारूपमथाज्येन पुनरुत्पादयेद्बुधः ॥ ५९८ ॥
अर्चापूजा तथा यत्नात्साज्या मासत्रयं बुधैः ।
ब्राह्मणेषु च दातव्यं इन्धनं शक्तितस्तथा ॥ ५९९ ॥
तृणं दद्याद्गवामर्थे यथाशक्ति द्विजातिषु ।
एवं यः कुरुते सम्यक् स रिपून् अधितिष्ठति ॥ ६०० ॥
कायाग्निदीप्तंसौभाग्यं लभते चोत्तमां गतिम् ।

इति नी० उत्तरायणवर्णनम् ।

नील उवाच

पौष्यां तु समतीतायां कृष्णा या द्वादशी भवेत् ॥ ६०१ ॥

---

१ Line 2 not in C. २ शुक्र D. ३ तथोक्त C, D. ४ भवीत-D ५ धन्यतः C. ६ कृता शैलेन या C. ७ नरः C. ८ ब्राह्मणेभ्यो-दातव्यः B. ९ यत्न C. १० छायाग्निदीप्तसौभाग्यं E.

तस्यां उपोषितः स्नातः तिले दत्त्वा तिलोदकम् ।
कृत्वा तिलैश्च नैवेद्यं तिलहोमं तथैव च ॥ ६०२ ॥
तिलाश्च देया विप्रेभ्यः[1] सर्वपापापनुत्तये ।

इति नीलमते नीलद्वादशीवर्णनम् ॥

तस्यास्त्वनन्तरं ब्रह्मन् या स्यात् कृष्णचतुर्दशी ॥ ६०३ ॥
अनर्काभ्युदिते काले स्नातव्यं शीतले जले ।
वितस्तायां विशोकायां चन्द्रवत्यामथापि वा ॥ ६०४ ॥
तथा हर्षपथायां वा त्रिकोट्यां वा द्विजोत्तम ।
सिन्धुं प्राप्याथवा पुण्यां तथा कनकवाहिनीम् ॥ ६०५ ॥
अन्यां वा सरितं पुण्यां ह्रदांश्चैव[2] सरांसि च ।
यमस्य नामभिर्दद्यात्[3] सप्तसप्तजलांजलिम् ॥ ६०६ ॥
एकैकेन[4] द्विजश्रेष्ठ तानि नामानि मे शृणु ।
यमाय धर्मराजाय मृत्यवे चान्तकाय च ॥ ६०७ ॥
वैवस्वताय कालाय सर्वप्राणहराय च ।
स्नात्वा तु पूजा कर्तव्या धर्मराजस्य वै तदा ॥ ६०८ ॥
पुष्पैः धूपैस्तथा गंधैः कृशरेण च भूरिणा ।
वह्निपूजा च कर्तव्या घृतयुक्तैस्तथा[5] तिलैः ॥ ६०९ ॥
कृषरं भोजनीयाश्च ब्राह्मणेन्द्राः सदक्षिणम् ।
एवं कृत्वा नरः शुद्धो मुच्यते सर्वकिल्बिषैः ॥ ६१० ॥
महापातकयुक्तश्चेन्न भवेच्च[6] द्विजोत्तम ।
महापातकिनां मोक्षः प्रायश्चित्तैर्विना कुतः ॥ ६११ ॥

इति नी० पौषकृष्णचतुर्दश्यां वाराराात्रिः ॥

नील उवाच ।

श्रवणेन युता सैव यदि पंचदशी भवेत्[7] ।
तस्यां स्नानादिकं सर्वं मतुष्यं परिकीर्तितम् ॥ ६१२ ॥

इति नी० पौषासिते श्रवणपञ्चदशीवर्णनम् ।

नील उवाच ।

माघमासे सिते पक्षे चतुर्थी या भवेद्द्विज ।
उमासंपूजनं कार्यं तस्यां सौभाग्यमीप्सुना ॥ ६१३ ॥

---

१ विप्रेषु C, D. २ ह्रदाश्चैव B. ३ चापि दातव्या D; नाम्निदातव्या C. ४ पूर्वैकस्मिन् C, D. ५ तदा C. ६ भवेत C, D. ७ श्रवणामावस्याः C.

दीपा[1]नुमाल्यधूपैश्चाप्यार्द्रकेण गुडेन च ।
कुसम्बलवणाभ्यां च कु[2]ङ्कुमाञ्जनकंकणैः ॥ ६१४ ॥
कन्दपुष्पैः समानीतैः प्रयत्नादपि कश्यप ।
पूज्याश्च सुभगास्तत्र योषितस्तु पतिव्रताः ॥ ६१५ ॥
[3]यासां जीवन्ति नाथाश्च श्वश्रूप्रभृतयश्च याः ।
तथैवाश्वयुजि मासे तथा ज्येष्ठे[4]पि कारयेत् ॥ ६१६ ॥
सर्वाः चतुर्थीः श्रद्धावान् चतुर्थी त्रितयं ध्रुवम् ।
कारयेत [5]ततो ब्रह्मन् नारीः कुर्याद्विशेषतः ॥ ६१७ ॥

इति नीलमते शुक्लचतुर्थीषु विशेषतश्चतुर्थीत्रितयवर्णनम् ।

नील उवाच ।

पौर्णमास्यां तु माघस्य श्राद्धं कृत्वा तिलैर्नरः ।
काकानां भोजनं दद्यात् प्रभूतं बलिसंयुतम् ॥ ६१८ ॥

इति नी० माघीवर्णनम् ॥

नील उवाच ।

माघ्यां तु समतीतायां अष्टम्यादिदिनत्रयम् ।
कार्यं स्वल्पं महीमानं विधिं तस्य निबोध मे ॥ ६१९ ॥
चतुर्विंशतिसंख्यायां त्रेतायां रघुनन्दनः ।
हरिर्मनुष्यो भविता रामो दशरथात्मजः ॥ ६२० ॥
तस्मात्कालात्परं कार्यं महीमानमथाल्पकम् ।
तस्मादेव परं कार्यं महीमानं तथा बृहत् ॥ ६२१ ॥
अष्टम्यां सर्वसस्यैस्तु चरुः कार्यः प्रयत्नतः ।
[6]तेनापूपैस्तथा पूज्या द्विजाः संबन्धिबान्धवाः ॥ ६२२ ॥
रामपत्नी तथा पूज्या सीतादेवी प्रयत्नतः ।
नवम्यां पिष्टभोजिन मधुयुक्तेन भोजयेत् ॥ ६२३ ॥
[7]ब्राह्मणाद्यान् यथाशक्ति पूजयेत करीषिणीम् ।
बहुप्रकारसंयुक्तं दशम्यां बोधनं[8] ततः ॥ ६२४ ॥
कारयेत्तेन संपूज्य द्विजमित्रानुयायिनः ।
आत्मपूजा च कर्तव्या श्रोतव्यं गीतवादितम् ॥ ६२५ ॥
मङ्गलालम्बनं कार्यं नित्यमेव दिनत्रयम् ।

इति नी० महीमानवर्णनम् ।

---

१ दीपान्न C. २ कुङ्कुम C. ३ येषां C. ४ च C, D. ५ नरो C, D.
६ Lines 22, 23 not in A. ७ ब्राह्मणांश्च D. ८ मोदनं C.

नील उवाच ।

सैव चेच्छ्रवणोपेता यदा स्याद्द्वादशी द्विज ॥ ६२६ ॥
सोपवासो हरिं देवं तस्यां संपूजयेद्द्विजः[1] ।
तिलवच्च तथा तस्यां पूर्वोक्तं कर्म कारयेत् । ६२७ ॥
सर्वं तदत्तयं तस्यां कृतं भवति मानद ।

इति नीलमते फाल्गुणश्रवणद्वादशी ।

नील उवाच ।

तस्यां तु समतीतायां या स्यात्कृष्णचतुर्दशी ॥ ६२८ ॥
तस्यामुपोषितः स्नातः पूजयेत महेश्वरम् ।
घृतकम्बलहीनं तु लिंगं संस्नापयेद्बुधः ॥ ६२९ ॥
देवोत्थानविधानोक्तैर्द्रव्यैश्च विधिना तथा ।
संपूज्य गन्धमाल्यादिरक्तवस्त्रानुलेपनैः ॥ ६३० ॥
नैवेद्यैर्विविधैर्ब्रह्मन् वह्निब्राह्मणतर्पणैः ।
भुक्त्वा रात्रौ तदा[2] कार्यो नृत्यगीतैः प्रजागरः[3] ॥ ६३१ ॥
श्रोतव्यः शिवधर्मश्च प्रादुर्भावश्च[4] तत्कृतः ।
पैष्टयाश्च पशवः कार्याः नैवेद्ये शंकरस्य च ॥ ६३२ ॥
पञ्चदश्यां च संपूज्य तथापि[5] द्विजपुंगवः ।
कल्माषलेपिका[6]मिश्रं भोक्तव्यं भोजनं तदा ॥ ६३३ ॥
तस्मिन्मासे ध्रुवं पूज्या देवः (?) कृष्णचतुर्दशी ।
इच्छया पूजनीयाः स्युः शेषमासेषु वा नवा ॥ ६३४ ॥
संपूज्य रुद्रलोकस्थो गाणपत्यमवाप्नुयात् ।
एकादश्यां मत्स्यमद्यैः पूजनीया गणा भुवि ॥ ६३५ ॥
गणेभ्यः प्रापणं दत्त्वा ऋद्धिसिद्धी भविष्यतः ।

इति नील० शिवरात्रिवर्णनम् ।

फाल्गुणस्य तु मासस्य शुक्लपक्षे द्विजोत्तमः ॥ ६३६ ॥
महीमानं यथा कार्यं तथा मे गदतः शृणु ।
अनश्नद्भिस्तथाष्टम्यां नरैः स्नातैरलंकृतैः ॥ ६३७ ॥
प्रदोषसमये देया दीपकास्तु हिमोपरि ।
देवतानां पितृणां च भोक्तव्यं तदनन्तरम् ॥ ६३८ ॥

---

१ बुधः D, C. २ तत्तः C. ३ प्रजागरं C. ४ प्रादुर्भुवा A. ५ तत्रापि A, D, C. ६ कुल्माषलोपिका C. ७ Lines 22, 23 not in B, C.

द्वितीयेऽहनि मध्याह्ने [1]धान्यकूटैश्च शोभनैः ।
पूजनीया गृहा विप्र देवागारा विशेषतः ॥ ६३९ ॥
तदा सीता च संपूज्या गंधमाल्यादिभिस्तथा ।
अनन्तरं च भोक्तव्यं भोजनं च विशेषवत्[2] ॥ ६४० ॥
[3]तत्सर्वं चैव[4] कर्तव्यं नृत्तगीतसमाकुलम् ।
नित्यदानं सपक्वान्नं ऋते तस्मिन्दिने [5]सदा ॥ ६४१ ॥
नान्यत्किंचित्प्रदातव्यं लब्धं ग्राह्यं प्रयत्नतः ।
द्वितीयेऽहनि कर्तव्यं प्रतिकर्म तथात्मनः ॥ ६४२ ॥
मङ्गलालम्बनं कार्यं [6]तत्सर्वं च विशेषवत्[7] ।
आश्रितानां द्विजातीनां शिल्पिसंबन्धिनां तथा ॥ ६४३ ॥
तस्मिन्नहनि दातव्यं ग्राह्यं चैवाप्युपायनम् ।
मद्यं तु मद्यपैर्पेयं ब्राह्मणैः पानकाः शुभाः ॥ ६४४ ॥
शय्यास्थानं च कर्तव्यं धूपगन्धादिभासितम् ।
तस्मिन्नहनि नो कार्य्यो विमुखः कश्चिदेव तु ॥ ६४५ ॥
स्त्रीभिर्भाव्यं प्रहृष्टाभिः [8]सवस्त्राभिस्तथैव च ।
[9]स्वर्चिताभिः सुगन्धाभिः स्वनुलिप्ताभिरेव च ॥ ६४६ ॥
भूषणैर्भूषिताभिश्च क्रीडितव्यं नरैः सह ।

इति नी० महीमानवर्णनम् ॥

नील उवाच ।

[10]फाल्गुण्यां तु ततो रात्रौ प्राप्ते चन्द्रोदये शुभे ॥ ६४७ ॥
पूजा कार्य्या शशाङ्कस्याप्यर्घश्चाप्यनन्तरम् ।
गीतैर्नृत्तैस्तथा वाद्यैः रात्रौ कार्यः प्रजागरः ॥ ६४८ ॥
द्वितीयेऽह्नि तथा प्राप्ते प्रेक्षा देया द्विजोत्तम ।
नर्तकानां नटानां च [11]चारणानां तथैव च ॥ ६४९ ॥
तावदेतत्भवेत्कार्यं यावत्स्यात्कृष्णपञ्चमी ।
भोक्तव्यं पर्पटप्रायं भोक्तव्यं दिनपञ्चकम् ॥ ६५० ॥
प्रतिकर्म तथा कार्यं स्त्रीजनस्य तथात्मनः ।

इति नीलमते फाल्गुणपौर्णमासीवर्णनम् ॥

---

१ धान्यदानैः सुशोभनैः C. २ वित् C. ३ उत्सवं C. ४ तत्र D. ५ तदा D. ६ उत्सवं च C, D. ७ विशेषकं C. ८ सुवस्त्राभिः C. ९ स्वर्चिताभिः सुगन्धाभिः C. १० फाल्गुणमास्तु C, D. ११ दारकाणां D.

नील उवाच ।

तस्यामेव तु पञ्चम्यां कश्मीरा तु रजस्वला ॥ ६५१ ॥
यस्माद्भवति कर्तव्या तस्य पूजा ततो द्विज ।
रम्या शिलामयी कार्या कश्मीरा तं च पूजयेत् ॥ ६५२ ॥
अभ्यंगवस्त्रदानेन नैवेद्यं च निवेदयेत् ।
पुष्पधूपाद्यलंकारं न दातव्यं दिनत्रयम् ॥ ६५३ ॥
नैवेद्यं[1] गोरसं सर्वं वर्जनीयं द्विजोत्तम ।
स्त्रीभिश्च पूजा कर्तव्या न नरैस्तु कदाचन ॥ ६५४ ॥
[2]स्नाप्या स्त्रीभिर्भवेद्देवी कृष्णपक्षाष्टमीं तु ताम् ।
अनन्तरं द्विजैः स्नाप्या सर्वौषधियुतैर्घटैः ॥ ६५५ ॥
[3]ततो गन्धैस्ततो बीजैस्ततो रत्नैस्ततः फलैः ।
वस्त्रालंकरणैश्चान्यैः विशेषैर्गोरसोद्भवैः ॥ ६५६ ॥
मुद्गैः पैष्टैः त्रिकोणैश्च तथा तण्डुलशालिभिः ।
कर्तव्यं देवयजनं बन्धूनां चैव दापयेत् ॥ ६५७ ॥
वह्निपूजया च कर्तव्या कर्तव्यं द्विजपूजनम् ।
[4]सुस्नाताभिः प्रहृष्टाभि स्वाशिताभिर्द्विजोत्तम ॥ ६५८ ॥
स्त्रीभिर्भाव्यं सुगन्धाभिः सुवस्त्राभिश्च तद्दिनम् ।
भोजनं प्रेषणीयं च तथा मित्रगृहे द्विज ॥ ६५९ ॥
तन्त्रीवाद्यं सुमधुरं श्रोतव्यं स्वाशितैः सुखम् ।

इति नी० कश्मीराख्यराज्ञीस्नपनम् ॥

नील उवाच ।

ततः प्रभृति कश्मीरा ऋतुस्नाता द्विजोत्तम ॥ ६६० ॥
गर्भं गृह्णात्यतः कार्यः कृष्यारम्भस्ततः परम् ।
दिने दैवज्ञनिर्दिष्टे क्षेत्रे कृत्वा सुहृद्वृतः ॥ ६६१ ॥
पूजयेत्पृथिवीं देवीं गोयुगं सुरभिं हयम् ।
[5]बलदेवं महादेवं वामदेवं दिवाकरम् ॥ ६६२ ॥
औषधीशं निशानाथं पर्जन्येन्द्रौ प्रचेतसम् ।
रामं सलक्ष्मणं सीतां शेषं च धरणीधरम् ॥ ६६३ ॥

---

१ नैवेद्ये गोरसाद्यं A. २ Line 9 not in B, C, D. ३ स्नापयित्वा च तां देवीं गन्धैर्माल्यैश्च पूजयेत् A. ४ Lines 16-19 not in B, C, A. ५ बालदेवं B, C.

[1]ब्रह्माणं कश्यपं वह्निं वायुं गगनमेव च ।
माल्यैर्गन्धैस्तथा धूपै नैवेद्यैश्च पृथक् पृथक् ॥ ६६४ ॥
वह्निसंपूजनं कार्यं ततो ब्राह्मणपूजनम् ।
ब्राह्मणानां ततो देया दक्षिणा वित्तशक्तितः ॥ ६६५ ॥
ततस्तु वापयेत् बीजं पुरुषं लक्षणान्वितम् ।
स्वाशितं च सुवस्त्रं च स्वनुलिप्तं स्वलंकृतम् ॥ ६६६ ॥
बीजं सुवर्णतोयाक्तं ससुवर्णं च वापयेत् ।
[2]पुण्याहं द्विजघोषेण वाद्यशब्देन भूरिणा ॥ ६६७ ॥
हलेन वाहयेद्भूमिं पूर्वं प्राक् प्रवणां शुभाम् ।
स्वलंकृतेन भोक्तव्यं क्षेत्रमध्ये तथा द्विज ॥ ६६८ ॥
सुहृद्भार्यासुतैः सार्धं वाद्यशब्दैर्मनोहरैः ।
[3]तत्सर्वं चैव कर्तव्यं गीतनृत्तसमाकुलम् ॥ ६६९ ॥

इति नीलमते कृष्यारम्भः ॥

नील उवाच ।

फाल्गुण्यां समतीतायां या द्विजैकादशी भवेत् ।
तस्यां स्त्रीभिर्भवेत्पूज्यश्छन्दोदेव इति श्रुतः ॥ ६७० ॥
नरैस्तु सा न कर्तव्या तस्य पूजा कथंचन ।
ब्राह्मणो वरदानेन स्त्रीभिः पूजामवाप्तवान् ॥ ६७१ ॥
जलोद्भवानां मांसेन भक्ष्यैरुच्चावचैस्तथा ।
माल्यैर्धूपैश्च विविधैः कुंकुमेन सुगन्धिना ॥ ६७२ ॥
एवं संपूजनं कृत्वा द्वादश्यां पूजयेद्बुधः ।
[4]द्वारेण द्वौ ( ? ) विनिष्कास्य गवाक्षेण प्रवेशयेत् ॥ ६७३ ॥
स्ववेश्मतस्तथा कामं स्थापयेत तदा द्विज ।

इति नी० चैत्रकृष्णैकादश्यां छन्दोदेवपूजावर्णनम् ॥

नील उवाच

ततश्चतुर्दशीं प्राप्य तामेव द्विजपुंगव ॥ ६७४ ॥
संपूज्य शंकरं कार्यो रात्रौ सुमहदुत्सवः ।
तस्यां विप्रचतुर्दश्यां निकुम्भः शंकरं [5]सदा ॥ ६७५ ॥
संपूजयति धर्मात्मा सानुयात्रो महाबलः ।
तस्यां तदा प्रकर्तव्यो निशि नित्यं प्रजागरः ॥ ६७६ ॥

---

1 ब्राह्मणं C. 2 Lines 8–12 not in A. 3 उत्सवं C, D.
4 Lines 22–23 not in A, B. 5 तथा C.

पूजा च देवदेवस्य शंभोः कार्या प्रयत्नतः ।
पूजनीयो निकुम्भश्च पिशाचाधिपतिर्बली ॥ ६७७ ॥
पिशाचानां च दातव्याः बलयश्च सुसंस्कृताः ।
वृक्षमूलेषु गोष्ठेषु गृहेषु विविधेषु च ॥ ६७८ ॥
चतुष्पथेषु रथ्यासु चत्वरेषु नदीषु च ।
शून्यालयेषु मुख्येषु गिरीणां शिखरेषु च ॥ ६७९ ॥
अट्टालक श्मशानेषु राजमार्गेषु काश्यप ।
तं रात्रि लक्षणं (?) कार्यं बालकानां गृहे गृहे ॥ ६८० ॥
पुंश्चलीसहितैर्नेया क्रीडामार्गेषु सा निशा ।
ब्रह्मचर्य्येण गीतेन नृत्तैर्वाद्यैर्मनोहरैः ॥ ६८१

इति नील० चैत्रकृष्णे पिशाचचतुर्दशी ॥

ततः पञ्चदशीं प्राप्य चान्त्यां संवत्सरस्य तु ।
श्राद्धं कृत्वा प्रदातव्यं शुनामन्नं यथेच्छकम् ॥ ६८२ ॥

इति नील० चैत्रामावर्णनम् ॥

नील उवाच ।

चैत्रशुक्लसमारम्भे प्रथमेऽहनि काश्यपः ।
पितामहस्य कर्तव्या तदा पूजा विचक्षणैः ॥ ६८३ ॥
पुष्पैर्नानाविधैर्गन्धैर्वस्त्रालंकारभूषणैः ।
धूपैर्हुताशपूजाभिर्ब्राह्मणानां च तर्पणैः ॥ ६८४ ॥

इति नी० चैत्रशुक्लप्रतिपदि ब्रह्मपूजा ।

नील उवाच ।

तस्मिन्नेवाऽह्नि कर्तव्या महाशान्तिर्द्विजोत्तम ।
आद्यैर्हि रक्षणार्थाय श्रियस्तत्प्रापणाय च ॥ ६८५ ॥
तस्मिन्नेवाह्नि कर्तव्या पूजाकालस्य काश्यप ।
तस्मिन्कालस्य गणना प्रवृत्ता पूर्वमेव तु ॥ ६८६ ॥
तस्मिन्नहनि वै सृष्टं ब्रह्मणेदं जगत्पुरा ।
सूर्योदये द्विजश्रेष्ठ इत्येवमनुशुश्रुम ॥ ६८७ ॥
पूजनीयास्तु ये देवा ब्रह्मविष्णुमहेश्वराः ।
ग्रहशान्तिः कर्तव्या दैवज्ञविधिचोदिता ॥ ६८८ ॥

१ पल्वलोत्पलकामिश्रः मत्स्यमांसामिषैर्युतः C. २ बालकानां गृहे गृहे A. ३ Line 8 not in A. ४ Lines 12–14 not in A, B. ५ चान्द्रन C, D.

पूजनीयाः ग्रहाः सर्वे नक्षत्राणि च मानद[1] ।
कालस्यावयवाः सर्वे ये च संवत्सरादयः ॥ ६८९ ॥
[2]कालकल्पावुभौ पूज्यौ मनवश्च चतुर्दश ।
अतीताश्च भविष्यन्तस्तेषां नामानि मे शृणु ॥ ६९० ॥
स्वायंभुवो मनुः पूर्वं मनुः स्वारोचिषस्तथा ।
औत्तमस्तामसश्चैव रैवतश्चक्षुषस्तथा ॥ ६९१ ॥
वैवस्वतोऽर्कसावर्णिर्ब्रह्मसावर्ण्य एवच ।
[3]रुद्रेशो दक्षसावर्णिः [4]रौच्यो भैत्यस्तथैव च ॥ ६९२ ॥
संपूजनीया देवेन्द्रास्तथा ब्रह्मन् चतुर्दश ।
विश्वभुक् च विपश्चिच्च सुचित्तिश्च निधिस्तथा
[5]विभुर्मनोजवश्चैव तेजस्वी च तथा बलिः ॥ ६९३ ॥
अद्भुतश्च तथा [6]शान्तो वृषो देववरस्तथा ।
ऋतधामा च देवेन्द्रः शुचिः शुक्रश्चतुर्दश ॥ ६९४ ॥
युगाना च तथा पूजा कर्तव्या द्विजसत्तम ।
[7]पञ्च संवत्सराः पूज्याः पूज्यं चैवायनद्वयम् ॥ ६९५ ॥
ऋतुषट्कं तथा पूज्यं मासा द्वादश चाप्यथ ।
द्वौ पक्षौ तिथयश्चैव पूज्याः पञ्चदशैव तु ॥ ६९६ ॥
[8]करणानि मुहूर्ताश्च राशयश्च पृथक् पृथक् ।
धर्मं [9]वशिष्ठं सत्यं च कामार्थौ च हुताशनम् ॥ ६९७ ॥
वसून् रुद्रान् लोकपालान् लोकालोकनिवासिनः ।
सुदामानं [10]शंखपादं केतुमन्तं तथैव च ॥ ६९८ ॥
तथा हिरण्य[11]रोमानं दिक्पालान् चैव पूजयेत् ।
[12]शंखाद्यान् ब्राह्मणश्रेष्ठ [13]दक्षपुत्रीस्तथैव च ६९९ ॥
सती ख्यातिः स्मृतिः स्वाहाप्यनुसूया तथा शुभा ।
प्रीतिः क्षमा च संभूतिः सन्नतिश्चाप्यरुन्धती ॥ ७०० ॥

---

१ नराधिपे: D. २ Line 3 not in A, B. ३ भद्राश्च D. ४ रौच्यौ D. ५ Line 11 not in A, B. ६ शान्तिः D. ७ Line 15 not in A. ८ C reads मरीचिमत्र्याङ्गिरसौ पुलस्त्यं पुलहं क्रतुं। भृगुं सनत्कुमारं च सनकं च सनन्दनम् after the line 18. ९ वशिष्ठं D. १० शंखनादं C, D. ११ वसनं D. १२ शक्राद्याः C, D. १३ दक्षपुत्र्यः C, D.

लक्ष्मीः कीर्तिर्धृतिर्मेधा तुष्टिः[1] श्रद्धा क्रिया मतिः ।
बुद्धिर्लज्जा वसुः शान्तिः पुष्टिः सिद्धिस्तथा रतिः ॥ ७०१ ॥
[2]सुरमा च वसुदाशी लम्बा भानुमरुद्वती ।
संकल्पाश्च मुहूर्ताश्च साध्या विश्वे च काश्यप ॥ ७०२ ॥
(?) अदितिर्दितिर्दनुः काला दनायुः सिंहिका मुनिः ।
कद्रूः क्रूरा इरा [3]खाता विनता सुरभिः [4]खशा ॥ ७०३ ॥
घृषाश्वाश्च तथा पूज्याः सुप्रभा च तथा जरा ।
बहुपुत्रश्च संपूज्यस्तस्य [5]पत्नीद्वयं तथा ॥ ७०४ ॥
पत्नी[6]चतुष्कसंयुक्तो ऽरिष्टनेमिस्तथैव च ॥ ७०५ ॥
[7]ऋद्धिर्वृद्धिस्तथा निद्रा धनेशो नलकूबरः ।
[8]शंखपद्मनिधी पूज्यौ भद्रकाली सरस्वती ॥ ७०६ ॥
वेदोपवेदवेदाङ्गविद्यास्थानानि कृत्स्नशः ।
[9]नागा यक्षाः सुपर्णाश्च तथैव गरुडारुणौ ॥ ७०७ ॥
जम्बुःशाकः कुशः क्रौञ्चः शाल्मलिर्द्वीप एव च ।
गोमेधः [10]पुष्करश्चैव द्वीपाः पूज्याः पृथक् पृथक् ॥ ७०८ ॥
लवणः क्षीरमाज्यं च दधिमण्डसुरोदकाः ।
तथैवेक्षुरसोदश्च पुण्यः स्वादूदकस्तथा ॥ ७०९ ॥
[11]उत्तराः कुरवः पुण्याः रम्यो हैरण्वतस्तथा ।
भद्राश्वः केतुमालश्च वर्षश्चैव इलावृतः ॥ ७१० ॥
हरिवर्षः किंपुरुषो वर्षो भारतसंज्ञकः ।
भारतस्य तथा भेदाः पूजनीयाश्च ये नव ॥ ७११ ॥
इन्द्रद्युम्नः कशेरुश्च ताम्रवर्णो गभस्तिमान् ।
नागद्वीपस्तथा सौम्य गान्धर्वो वारुणस्तथा ॥ ७१२ ॥
अयं च मानवो द्वीपस्तथा [12]सागरसंभृतः ।
चत्वारः सागराः पूज्यास्तथा पातालसप्तकम् ॥ ७१३ ॥
[13]रुक्मभौमशिलाभौमपातालो नीलमृत्तिकः ।
रक्तभौमः पीतभौमः श्वेतकृष्णक्षितिस्तथा ॥ ७१४ ॥

---

१ पुष्टिः C. २ Line 3 not in A; अरुन्धती वसून्दाशी C, D. ३ मराता A; पराता C, D. ४ क्रोधा C, D. ५ पुत्री C. ६ पत्नीचतुष्कसंयुक्तं पूज्यं चारिष्टनेमिनं C, D. ७ ऋद्धिं सिद्धिं तथा निद्रां D. ८ Line 11 not in A, B. ९ नागान् यक्षात् पिशाचान् च C. १० पुष्कल D. ११ Lines 18, 19 not in A B. १२ संसार D. १३ Lines 26 to 1st of page 59 not in A, B.

कालाग्निरुद्रशेषश्च वराहश्च तथा हरिः ।
भूर्भुवः स्वः महश्चैव जनश्च तपसा सह ॥ ७१५ ॥
मर्त्यलोकस्तथालोकः पूजनीया द्विजोत्तम ।
पृथिव्यापस्तथा तेजः पवनं खं च पूजयेत् ॥ ७१६ ॥
मनो बुद्धिस्तथात्मानमव्यक्तं पुरुषं तथा ।
[१]हिमवान् हेमकूटश्च निषधो नीलपर्वतः ॥ ७१७ ॥
श्वेतश्च शृंगवान मेरुर्माल्यवान् गंधमादनः ।
पर्वतः प्रवरः पूज्यो यो नाम्ना मानसोत्तरः ॥ ७१८ ॥
महेन्द्रो मलयः सह्यः [२]शक्तिमानृक्षवानपि ।
विन्ध्यश्च पारयात्रश्च कैलासश्च नगोत्तमः ॥ ७१९ ॥
भागीरथी पावनी च ह्लादिनी ह्लादिनी तथा ।
सीता सिन्धुश्च वंक्षुश्च सप्तगंगाश्च मानद ॥ ७२० ॥
[३]सुप्रभा काञ्चनाक्षी च विशाला मानसा ह्रदा ।
सरस्वत्यो घनासा च [४]सवेगा विमलोदकाः ॥ ७२१ ॥
पुष्करादीनि तीर्थानि वितस्ताद्याश्च निम्नगाः ।
शची वनस्पतिर्गौरी धूम्रोर्णा रुचिराकृतिः ॥ ७२२ ॥
सिनीवाली कुहूः राका तथा चानुमतिः शुभा ।
आयतिर्नियतिः प्रज्ञा मति[५]र्वेलाच धारिणी ॥ ७२३ ॥
[६]देव्यो धातृविधातारौ सप्त छन्दांसि चाप्यथ ।
ऐरावणश्च सुरभिस्तथैवोच्चैःश्रवाः हयः ॥ ७२४ ॥
धन्वन्तरि र्ध्रुवश्चैव शास्त्राण्यस्त्राणि चाप्यथ ।
विनायकः कुमारश्च तथैवच विनायकः ( ? ) ॥ ७२५ ॥
शाखो विशाखः स्कन्धश्च [७]नैगो मेषस्तथैवच ।
मरुतश्च ग्रहश्चैव रोगाणामधिपो ज्वरः ॥ ७२६ ॥
[८]ऋषयो बालखिल्याश्च कश्यपागस्त्यनारदाः ।
तथैवाप्सरसः पुण्याः पूज्या देवाश्च सोमपाः ॥ ७२७ ॥
आदित्या वसवो रुद्रा विश्वेदेवास्तथाश्विनौ ।
[९]भृगवोऽङ्गिरसः साध्या मरुतश्च महाबलाः ॥ ७२८ ॥

---

१ Lines 6–8 not in A, B. २ शुक्तिमान् C, D. ३ Lines 13, 14 not in A, B. ४ स्वावेत्र D; सुवेरुः C. ५ मेधा D. ६ Line 19 not in A, B. ७ नैगमेषः D. ८ Line 99 not in A, B. ९ Lines 28 to the 4th of page 60 not in A, B.

धाता मित्रोऽर्यमा पूषा शक्रेशो वरुणो भगः ।
त्वष्टा विवस्वान् सविता विष्णुर्द्वादशभानवः ॥ ७२९ ॥
धनुर्ध्रुवश्च भोजश्च आपश्चैवानिलानलौ ।
प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्तिताः ॥ ७३० ॥
अङ्गारकस्तथा सूर्यो नैरृतो घोष एवच ।
अजैकपाद्ध्यहिर्बुध्न्यः धूमकेतुर्ध्वजस्तथा ॥ ७३१ ॥
वाहनं चेश्वरो मृत्युः कपाली कङ्कणस्तथा ।
[1]एकादशैते विज्ञेयाः रुद्रा हि त्रिभुवनेश्वरः ॥ ७३२ ॥
नासत्यदस्रौ विज्ञेयावश्विनौ वदतां वर ।
भुवनो [2]भावनश्चैव सुजन्यो सुजनः क्रतुः ॥ ७३३ ॥
त्याज्यः सुत्रश्च मूर्धा च दत्तश्च[3]यश्च बन्धुकः ।
प्रसवश्च व्ययश्चैव भृगवो द्वादश स्मृताः ॥ ७३४ ॥
आत्मा चायुर्मनो दत्तो मदः प्राणस्तथैवच ।
हविष्मांश्च गरिष्ठश्च ऋतुः सत्यस्तथैवच ॥ ७३५ ॥
एते तंऽगिरसः पुत्रा दश देवा महाबलाः ।
[4]मनो मदश्च प्राणश्च नरपालश्च वीर्यवान् ॥ ७३६ ॥
दितिर्ह[5]यो नयश्चैव हंसो नारायणस्तथा ।
विभुश्चापि प्रभुश्चैव साध्या द्वादश कीर्तिताः ॥ ७३७ ॥
एकज्योतिर्द्विज्योतिश्च त्रिज्योतिर्ज्योतिरेवच ।
[6]एकचक्रो द्विचक्रश्च त्रिचक्रश्च महाबलः ॥ ७३८ ॥
ऋतजित् सत्यजिच्चैव सुषेणः षेणजित्तथा ।
अग्निमित्रोऽरिमित्रश्च प्रभुमित्रः पराजितः ॥ ७३९ ॥
ऋतश्च ऋतवाक्[7] धर्ता निधर्ता वरुणो ध्रुवः ।
विदारणो नाम तथा देवदेवो महाबलः ॥ ७४०
ई[8]दृक्श्चाप्यदृक्श्च ईदृगमिताशनः ।
[9]कृती नम्रः सकृद्दत्तः समरश्च [10]महायशाः ॥ ७४१ ॥

---

१ C, D read क्रतुर्दक्षो वसुः सत्यः कालः कामोऽथ निस्तथा । कुरुवाक् दनुजो विश्वे रोचमानश्च ते दश । after the line 8. २ भानव C. ३ वृश्च C. ४ मृदो D. ५ जयो D. ६ D reads इन्द्राश्च कुरवोदृश्याः तथा पृकृत्स्नकृत्तथा । असितश्च समितश्च सस्मिताश्च महाबलाः after the line 20. ७ ऋतवान् C, . ८ ईदृगादृक् D; मृदृक्ष C. ९ कृतिनः प्रसकृत् C, D. १० महायमः D.

धाता चोग्रधनुर्भीमश्चापि युक्तः सदा सहः[1] ।
[?] दितिर्वसुरथो ह्यशुवासः कामजयो[2] विराट् ॥ ७४२ ॥
एते ह्येकोनपञ्चाशन्मरुतः परिकीर्तिताः ।
विश्वकर्मा तथा पूज्यः सर्वशिल्पप्रवर्तकः ॥ ७४३ ॥
आयुधं वाहनं छत्रं आसनं चिह्नदुन्दुभिः ।
संपूज्य विधिवद्ब्रह्मन् गन्धमाल्यानुलेपनैः ॥ ७४४ ॥
धूपदीपप्रधानैश्च नैवेद्यैश्च पृथक् पृथक् ।
एतेषां पूजनं कृत्वा वल्लभ[3]कुसुमोत्करैः ॥ ७४५ ॥
फलं[4] वेदास्तथा ज्ञात्वा नगवर्षस्य वारकम्[5] ।
एषां च पूजनं कृत्वा पूजनीया विशेषतः ॥ ७४६ ॥
ग्रहो नागस्तथा मासः यः स्यात्संवत्सरः प्रभुः ।
ग्रहो भविष्यद्वर्षस्य तथा मासस्य वारकः ॥ ७४७ ॥
दैवज्ञवक्त्राद्विज्ञेयो ग्रहमासो विचक्षणैः ।
दैवज्ञादेव विज्ञेयं मासवर्षस्य वारकम् ॥ ७४८ ॥
तस्य पूजा प्रयोक्तव्या भक्ष्यभोज्यपुरस्सरा ।
ततो[6]ऽग्निहवनं कार्यं सर्वेषामनुपूर्वशः ॥ ७४९ ॥
ओँकारपूर्वकं ब्रह्म नाममध्ये निरन्तरम् ।
नमोन्तं[8] च मनुं कृत्वा जुहुयाद्विधिपूर्वकम् ॥ ७५० ॥
वित्तशाठ्यं परित्यज्य घृताक्षतयवैस्तिलैः[7] ।
पृथक्[9] पृथक् तथोद्दिश्य देया विप्रे सुदक्षिणा ॥ ७५१ ॥
ब्राह्मणा भोजनीयाश्च सुहृत्संबन्धिबान्धवाः ।
विशेषतश्च भोक्तव्यं कार्यश्चापि महोत्सवः ॥ ७५२ ॥
पूजनीया द्विजश्रेष्ठ तथा ज्योतिषका द्विजाः ।
धन्यधान्यौघवस्त्रैश्च पूज्याश्च द्विजपुंगवाः ॥ ७५३ ॥
फलवेदविदश्चैव इतिहासविदश्च ये ।
याँचकाः[10] पूजनीयाश्च दक्षिणाभिमुखा द्विजाः ॥ ७५४ ॥
आत्मशोभा च कर्तव्या पुष्पालङ्कारधूपनैः ।
कथितेयं[11] महा[12]शान्तिः सदाघविनिसूदिनी ॥ ७५५ ॥

---

१ मदः D. २ दाम C. ३ बहूम्र A. ४ फलभेदान् D. ५ नारिकं D. ६ Line 16 not in A, B. ७ घृताक्षतयवैस्तिलैः C. ८ Lines 18, 19 not in C, D. ९ तान् पृथक् पृथक् C, D. १० वाचकाः A, C, D. ११ Line 28 not in A. १२ मया C, D.

[1]सर्वोत्पातप्रशमनी कलिदुःस्वप्ननाशिनी ।
आयुप्रदा पुष्टिकरी धनसौभाग्यवर्धिनी ॥ ७५६ ॥
[2]व्याधिशत्रुप्रशमनी राज्यराष्ट्रविवर्धनी ।
मंगल्या च पवित्रा च लोकोभयसुखावहा ॥ ७५७ ॥
चित्रमाससमारम्भे ये मया विहितास्तव ।
ते सर्वे ब्रह्मसदनं तदा यान्ति द्विजोत्तम ॥ ७५८ ॥
ब्राह्मी सभा कामरूपा विशेषेण सदाऽनघो ।
धारयत्यचलं रूपमनिर्देश्यं मनोहरम् ॥ ७५९ ॥
तस्यां सभायां ब्रह्माणमनिर्देश्यौजसा वृतम् ।
यथोक्तास्तु नमस्यन्ति स्तुवन्तः पर्युपासते ॥ ७६० ॥
विश्वावसुश्चाश्विनौ च गन्धर्वौ च हहाहूहूः ।
नारदप्रमुखाश्चान्ये गायन्ति च जगद्गुरुम् ॥ ७६१ ॥
[3]नृत्यन्त्युपचतुर्वक्त्रं देवरामाः सहस्रशः ।
उर्वशी मेनका रम्भा मिश्रकेशी [4]त्वलंबसुः ॥ ७६२ ॥
विश्वाची च घृताची पञ्चचूला तिलोत्तमा ।
[5]सानुमत्यमला वृन्दा प्राधान्येन तथेतराः ॥ ७६३ ॥
तदा पितामहो देवः सर्वदेवसमागमे ।
अब्दे नियुंक्ते मानसे (?) ग्रहादीन् तत्र पालकान् ॥ ७६४ ॥
(?) क्रतूनासां जगद्भर्तुर्गताः स्थानान्यतः परम् ।
स्वानि स्वानि द्विजश्रेष्ठ हृष्टपुष्टदिवौकसः ॥ ७६५ ॥

इति नील० नववत्सरप्रथमे दिने सर्वापच्छान्तिकरमहाशान्तिवर्णनम् ॥

चैत्रे[6] मासे सिते पक्षे पञ्चम्यां द्विजसत्तम ।
श्रियस्तु पूजनं कार्यं प्रोक्ता श्रीपञ्चमी तु सा ॥ ७६६ ॥
सर्वा वा पञ्चमी पूज्या चैत्रे मासे ध्रुवा तथा ।
यस्तु संपूजयेत्सर्वां पञ्चमीं तु करीषिणीम् ॥ ७६७ ॥
नासौ विश्लिष्यते लक्ष्म्या यावज्जीवं द्विजोत्तम ।
विष्णुलोकमवाप्नोति देहभेदे द्विजोत्तम ॥ ७६८ ॥

इति नी० श्रीपञ्चमीवर्णनम् ॥

---

१ सर्वाघविनिसूदिनी C. २ Line 3 not in A. ३ अग्रे नृत्यन्ति देवेशं देवनार्यः D. ४ ह्यलंवशा C, D. ५ मानवत्यमलावन्या D. ६ Lines 22-28 not in C.

नील[1] उवाच ।
तत्रैव च सिते पक्षे या षष्ठी द्विजसत्तम ।
स्कन्धस्य तत्र कर्तव्या पूजा माल्यैः सुगन्धिभिः ॥ ७६९ ॥
गन्धालंकारवासांसि कुंकुमं[2] च निवेदयेत् ।
घण्टा[3]मजं क्रीडनकं नैवेद्यं सुमनोहरम् ॥ ७७० ॥
ध्रुवेयं चैत्रषष्ठी च परिशिष्टास्तु कामतः ।
यः करोति गृहे तस्य विरोगाः सर्वबालकाः ॥ ७७१ ॥
इति नी० बालरक्षाकारिचैत्रशुक्लषष्ठीवर्णनम् ।
[4]तामेव नवमीं प्राप्य सोपवासो नरः शुचिः ।
संपूजयेद्भद्रकालीं पुष्पधूपान्नसंपदा ॥ ७७२ ॥
सर्वा वा नवमी पूज्या भद्रकालीश्वरीश्वरी ।
कार्यसिद्धिमवाप्नोति तस्यां पूजयिता नरः ॥ ७७३ ॥
इति नी० चैत्रशुक्लभद्रकाली नवमी ॥
नील उवाच ।
एकादश्यां तु चैत्रस्य शुक्लपक्षे द्विजोत्तम ।
तस्यां पूजा प्रकर्तव्या वास्तोः[5] ब्राह्मणपुंगव ॥ ७७४ ॥
पुष्पालंकारधूपाद्यैः शाकैश्च विविधैस्तथा ।
धूपैश्च विविधाकारैर्वह्निपूजा द्विजार्चनैः ॥ ७७५ ॥
इति नी० एकादश्यां वास्तुपूजावर्णनम् ।
नील उवाच
[6]द्वादशी या तु चैत्रस्य शुक्ला नित्यमुपोषितैः ।
वासुदेवस्य कर्तव्या पूजा तत्र यथाविधि ॥ ७७६ ॥
इति नी० चैत्रशुक्लद्वादश्यां वासुदेवार्चनम् ।
नील उवाच ।
चैत्र शुक्लत्रयोदश्यां कामदेवं तु पूजयेत् ।
पटस्थं[7] विविधैर्माल्यैर्गन्धैरुच्चावचैस्तथा ॥ ७७७ ॥
आत्मशोभा तु कर्तव्या पूजनीया गृहस्त्रियः ।
इयं ध्रुवा विनिर्दिष्टा शेषाः कार्या न वा द्विज ॥ ७७८ ॥

---

१ Lines 1, 2 not in C, D. २ कुक्कुटं A, B. ३ गजक्रीडनकं ४ Lines 9–13 not in A, B. ५ वास्तु A, B. ६ Lines 21–23 not in A, B. ७ पट्टस्थं D; पट्टस्थे C.

द्वादश्यां शीततोयस्य कुम्भं पुष्पोपशोभितम् ।
कामाग्रतस्तु संस्थाप्य पल्लवैश्चोपशोभितम् ॥ ७७९ ॥
अनर्काभ्युदिते काले स्नाप्यः स तेन वारिणा ।
दयिता द्विजशार्दूल स्वयं कान्तेन काश्यप ॥ ७८० ॥

इति नी० चैत्रशुक्लत्रयोदशी–मदनत्रयोदशी वर्णनम् ॥

नील उवाच ।

चैत्रे मासे सिते[1] पक्षे पञ्चदश्यां द्विजोत्तम ।
योद्धुं याति निकुम्भस्तु पिशाचान्वालुकार्णवे ॥ ७८१ ॥
तस्मात्तेषां तु मध्याह्ने प्रत्येकं तु गृहे गृहे ।
पूजा कार्या विधानेन[2] यथावार्ता[3] निबोध मे ॥ ७८२ ॥
पिशाचं मृण्मयं कृत्वा कान्तं[4] च द्विजसत्तम ।
गन्धमाल्यैस्तथा वस्त्रैरलंकारैश्च पूजयेत् ॥ ७८३ ॥
भक्ष्यैश्च लेपिकापूपैर्मांसैः[5] पानैस्तथाविधैः ।
आयुधैर्विविधाकारैः छत्रोपानहयष्टिभिः ॥ ७८४ ॥
नृभिः शुक्लान्नसंपूर्णं संस्थाप्यनेकभक्षकम्[6] ।
कुद्दालपिटकेचौभे[7] तथा तस्य निवेदयेत् ॥ ७८५ ॥
गेयमानकवाद्यं[8] च तन्त्रीवाद्यं च वादयेत् ।
मध्याह्ने तत्तु[9] संपूज्य प्राप्ते चन्द्रोदये पुनः ॥ ७८६ ॥
पूर्ववत्पूजयेद्विद्वान् स्ववित्तस्यानुरूपतः ।
तथा कृतस्वस्त्ययनो ब्राह्मणैस्तु विसर्जयेत् ॥ ७८७ ॥
विसृज्यमाने तस्मिंस्तु[10] तंत्रीवाद्यं च वादयेत् ।
तस्यानुव्रजनं कार्यं द्वितीयेऽहनि काश्यप ॥ ७८८ ॥
आरोढव्यो भवेच्छैलः समीपस्थ इति स्थितिः ।
गृहमागत्य कर्तव्य उत्सवो[11] गीतवादितैः[12] ॥ ७८९ ॥
सुहृद्भिः सह भोक्तव्यं भोजनं तु विशेषतः ।

इति नी० चैत्र पिशाचप्रयाणवर्णनम् ॥

---

१ श्वेत D. २ यथावत् तत् C, D. ३ प्रयत्नेन C. ४ वृन्तं D ५ लोपिका C, D. ५ स्थायीभक्ष्ययुता तथा C, D. ६ शोभी B. ७ त्वदःयस्य D. ८ मानद A, B. ९ वाद्ये तु C, D. १० तत्सरो B. ११ वादितैः C. १२ सुराप C.

नील उवाच ।

इलानाम्न्यप्सरः पूर्वं शप्ता शक्रेण काश्यप ॥ ७९० ॥
विश्वावसोः संप्रयुक्ता [1]स्वरूपस्थानवर्जिता ।
स्थावरत्वमनुप्राप्ता हिमवत्यचलोत्तमे ॥ ७९१ ॥
बहुधा सा [2]विभक्ताङ्गी निकुम्भे निर्गते बहिः ।
[3]तदा जाता त्विरा देवी इरापुष्पोपशोभिता ॥ ७९२ ॥
इरावाटं ततो गत्वा नारीपुत्रगणान्वितः ।
[4]सुवासाः स्वनुलिप्तांगः सुचितः सुसमाहितः ॥ ७९३ ॥
इरासंपूजनं [5]कुर्यात् पुष्पैरन्यैर्[6]विचक्षणः ।
निवेदयेच्च विविधान् भक्ष्यान् भोज्यान् सुदीपकान् ॥ ७९४ ॥
इरावाटे ततो गत्वा भोक्तव्यं तु विशेषवत् ।
इरापुष्पैस्तथा पूज्या द्विजाः स्त्रीमित्रबान्धवाः ॥ ७९५ ॥
रक्तसूत्रनिबद्धानि इरापुष्पाणि कारयेत् ।
बिभृयादात्मना तानि स्त्रीषु दद्याद्विशेषतः ॥ ७९६ ॥
श्रोतव्यं गीतवाद्यादि द्रष्टव्यं नर्तनं तथा ।
इरापुष्पसमायुक्तं पानं पेयं विशेषवत् ॥ ७९७ ॥
पाने चोक्तो विधिः पूर्वं मद्यपैर्मद्यमेव च ।
सदाचारपरैर्नित्यं पानकानि विशेषतः ॥ ७९८ ॥
इरादेवीषु दातव्याः प्रियन्ते येन[8] देवताः ।
इरासहस्रं यो दद्यात्केशवाय समाहितः ॥ ७९९ ॥
तस्य तुष्यति देवेशः स्वर्गलोकं नयेच्च तम् ।
इरया पूजयेद्रुद्रं ब्रह्माणं चैव विशेषतः ॥ ८०० ॥
[11]प्रजापतीन् तथा सर्वान् वासवं शशिनं रविम् ।
शुभां करीषिणीं दुर्गां तोषयेत्[12] सर्वदेवताः ॥ ८०१ ॥
इरा नारीषु दयिता दयिता मे विशेषतः ।
[13]तस्मान्नागान्मया सार्धमिरयाभ्यर्चयेद्बुधः ॥ ८०२ ॥

---

१ सुराप C. २ विलोभ्याक्षी C. ३ यदा C, D. ४ सुवासाः C. ५ कार्यं C, D. ६ विचक्षणैः C, D. ७ Lines 17, 18 not in C, D. ८ तथा before प्रीयन्ते C, D. ९ स गच्छति C, D. १० शशिनं रविं C, D. ११ Line 23 not in C, D. १२ सर्वास्तुष्यन्ति देवताः C, D. १३ Line 26 not in C, D.

इरावाटे तु यः पूजां करोति मम काश्यप ।
इरापुष्पैर्भृशं तेन तुष्टिर्मेऽपि प्रजायते ॥ ८०३ ॥

इति नी० चैत्र्यामिरामञ्जरीपूजावर्णनम् ॥

शुक्लवैशाखमासस्य तृतीयायां द्विजोत्तम ।
यवानुत्पादयामास कृतं च कृतवान् युगम् ॥ ८०४ ॥
तस्यां कार्यो यवैर्होमो यवान् दद्याद्द्विजातये ।
यवैः संपूजयेद्विष्णुं भोक्तव्याश्च तथा यवाः ॥ ८०५ ॥
अस्यामेव तृतीयस्यां शुक्लगायां जनार्दनः ।
ब्रह्मलोकात्त्रिपथगां पृथिव्यामवतीर्णवान् (?) ॥ ८०६ ॥
गङ्गासंपूजनं कार्यं तस्मिन्नहनि काश्यप ।
जपहोमस्तथा श्राद्धं तपः स्नानादिकं च यत् ॥ ८०७ ॥
अक्षयं सर्वमुद्दिष्टं दानस्वल्पमपि ध्रुवम् ।
सिन्धुतीरे प्रयत्नेन द्वितीयायामुपोषितः ॥ ८०८ ॥
तृतीयेयं प्रकर्तव्या मनुजैस्तु यथाविधि ।

इति नी० अक्षयतृतीया ॥

नील उवाच ।

विष्णुर्देवो जगन्नाथः प्राप्ते ब्रह्मन् कलौयुगे ॥ ८०९ ॥
अष्टाविंशतिमे भावी बुद्धो नाम जगद्गुरुः ।
पुष्ययुक्ते निशानाथे वैशाखे मासि काश्यप ॥ ८१० ॥
तस्मात्कालादथारभ्य कालं भाविन्यतः परम् ।
शुक्ले संपूजनं तस्य यथा कार्यं तथा शृणु ॥ ८११ ॥
सर्वौषधिसमायुक्तैः सर्वगन्धैः सुभावितैः ।
सर्वमंगलयुक्तैश्च सर्वरत्नैस्तथैव च ॥ ८१२ ॥
बुद्धार्चास्थापनं कार्यं शाक्योक्तैर्वचनैस्तथा ।
सुधासिता च कर्तव्या शाक्यावासः प्रयत्नतः ॥ ८१३ ॥
कार्यश्चित्रयुतः कार्यः चैत्यदेवालयस्तथा ।
एतत्सर्वं तथा कार्यं नटनर्तनसंकुलम् ॥ ८१४ ॥
शाक्यानां पूजनं कार्यं गोवस्त्राहारपुस्तकैः ।
सर्वमेतद्भवेत्कार्यं यावत्प्राप्ता भवेन्मया ॥ ८१५ ॥

---

१ तुष्टिमेति प्रजापतिः A, C. २ Lines 4–15 not in B. ३ तृतीयायां C, D. ४ स्नापनं C, D. ५ चान्ये B ६ नीवर C.

दिनत्रयं च कर्तव्यं नैवेद्यं विधिवद्द्विज ।
पुष्पवस्त्रादिपूजा च दानं दीनजनस्य च ॥ ८१६ ॥

इति नी० वैशाखशुक्लपुष्पयोगे बुद्धजन्ममहोत्सववर्णनम् ॥

नील उवाच ।

पौर्णमासीं तु संप्राप्य वैशाखस्य द्विजोत्तमः ।
स्वन्नयुक्तैस्तिलैः कार्यं तदा ब्राह्मणपूजनम् ॥ ८१७ ॥
तिलैः स्नानं तिलैर्होमस्तिलैः श्राद्धं तथैव च ।
मात्रादानं तु कर्तव्यं दीपदानं सुरालये ॥ ८१८ ॥
तिला देया च विप्रेषु भक्षणीयास्तथा तिलाः ।
माघकृष्णे द्विजश्रेष्ठ एकादश्यामुपोषितैः ॥ ८१९ ॥
द्वादश्यां सकलं कार्यं वैशाखोक्तं मयात्र यत् ।
वैशाख्यां पौर्णमास्यां तु ब्राह्मणान् सप्त पंच वा ॥ ८२० ॥
क्षौद्रयुक्तैस्तिलैः कृष्णैरर्चयेदथवेतरैः ।
पैश्वाच्च भोजनं दद्यात् कृषराणां विशेषतः ॥ ८२१ ॥

इति नी० वैशाखपौर्णमासीवर्णनम् ॥

नील उवाच ।

बुधो ज्यैष्ठीं च संप्राप्य ज्येष्ठायुक्तां विशेषतः ।
तिलांश्च मधुसंयुक्तान्दद्याद्भक्त्या विचक्षणः ॥ ८२२ ॥
छत्रं सूपानहौ चापि वस्त्रयुग्मं तथैव च ।
दद्याद्ब्राह्मणवर्याय भोजनं च विशेषवत् ॥ ८२३ ॥
प्रीयतां धर्मराट् चेति यदा मनसि वर्तते ।
यावज्जीवं कृतं पापं तत्क्षणात्प्रविनश्यति ॥ ८२४ ॥
विशेषतः पौर्णमासी ज्येष्ठा चैव विशेषतः ।
धर्मराजस्य तुष्ट्यर्थं मासे सर्वत्र कारयेत् ॥ ८२५ ॥

इति नी० ज्यैष्ठी वर्णनम् ॥

नील उवाच ।

औषधीनां यदा राजा यवः संपक्वतां व्रजेत् ।
यवान्नेन तदाभ्यर्च्या देवताः पितरस्तथा ॥ ८२६ ॥

---

१ मधु C, D. २ दक्षणीया C. ३ Lines 14, 15 not in C, D. ४ धर्मराजेति C, D. ५ Lines 23, 24 not in C, D. ६ Lines 27 and 4th. of page 68 not in B.

ततोऽनुलिप्तः स्रग्वी च नववासा यथाविधि ।
देवब्राह्मणघोषेण यवान्नं प्राशयेद्द्विजान् ॥ ८२७ ॥
सम्यगभ्यर्च्य तान् तत्र यवान्नं प्राशयेत्स्वयम् ।

इति नी० यवाग्रायण वर्णनम् ॥

नील उवाच ।

ज्यैष्ठ्यां तु समतीतायां या द्विजेन्द्राष्टमी भवेत् ॥ ८२८ ॥
तस्यां विनायकः पूज्यः सगणो मोदकोत्करैः ।
भक्ष्यैर्माल्यैस्तथागंधैः कल्माषैर्नच भूरिणा (भूरिभिः) ? ॥ ८२९ ॥
गीतवाद्यैः मधुरैर्ब्राह्मणानां च तर्पणैः ।
सर्वासु पूजनीयस्तु अष्टमीषु विनायकः ॥ ८३० ॥
कार्यसिद्धिमवाप्नोति सोपवासस्तु पूजयेत् ।
ततो द्वितीये द्विवसे ब्राह्मणान्भोजयेन्नरः ॥ ८३१ ॥
मोदकान्वितमन्नं तत् सविशेषं मुदा परम् ।
वसनैर्दक्षिणाभिश्च ब्राह्मणांस्तर्पयेद्बुधः ॥ ८३२ ॥

श्री नील० विनायकाष्टमीवर्णनम् ॥

नील उवाच ।

आषाढ़मासे संप्राप्य सातियोगं तथा द्विज ।
वायुसंपूजनं कार्यं गन्धैर्माल्यैः सुशोभनैः ॥ ८३३ ॥
नैवेद्यैश्चैव विविधैस्तथा वस्त्रानुलेपनैः ।
भूरिणा परमान्नेन सक्तुना विविधेन च ॥ ८३४ ॥
सुमनोभिर्विचित्रैश्च कुसुमैश्च तथाऽपरैः ।
वासोभिर्विविधैश्चैव दक्षिणाभिश्च तर्पयेत् ॥ ८३५ ॥

इति नी० सातियोगवर्णनम ।

नील उवाच ।

आषाढशुक्लपक्षान्ते कर्तव्यं दिनपञ्चकम् ।
देवप्रस्वापने ब्रह्मन् उत्सवैर्गीतवादितैः ॥ ८३६ ॥
एकादशीचतुर्दश्योर्बलिं होमं च कारयेत् ।
विष्णवर्चां स्थापयेदग्रे शंखचक्रगदाधरम् [?] ॥ ८३७ ॥

---

१ वाद्य C. २ Lines 12–14 not in C, D. ३ योगी C. ४ Lines 18, 19 not in D. ५ Line 19 not in C. ६ Line 22 not in C, D. ७ दिवाप्रस्वापनं A, B, D. ८ आज्यं D; धनं C. ९ Lines 28 to the 2nd. of page 69 not in C, D.

पीताम्बरं [?] युगच्छन्नां सोमरूपं चतुर्भुजम् [?] ।
चक्राढ्यां श्रीशय्याभ्यां च संवाहितपदोभयाम् ॥ ८३८ ॥
निशाद्वये ऽत्र कार्यं च रात्रिजागरणं तथा ।
द्वादश्यां पञ्चदश्यां च द्विजस्वान्तनपूजनम् ॥ ८३९ ॥
देशे[1] काले तु कर्तव्यं प्रेक्षादानं यथाविधि ।
धनं च शक्त्या दातव्यं ये नराः रङ्गजीविनः ॥ ८४० ॥
हिंसात्मकैस्तु किं तस्य यज्ञैः कार्यं महात्मनः ।
प्रस्वापे च प्रबोधे च पूजितो येन केशवः ॥ ८४१ ॥

इति नी० प्रस्वापवर्णनम् ।

नील उवाच ।

आषाढान्ते वैश्वदेवं नक्षत्रं प्राप्य पंडितः ।
विद्वान् संपूजयेद्देवान् वाग्यज्ञविधिना तदा ॥ ८४२ ॥

इति नी० वैश्वदेवपूजा ॥

नील उवाच ।

सक्तून् गोरससंमिश्रान् ब्राह्मणेभ्यः प्रदापयेत् ।
हिमं च शर्करां चैव शाकं हरितकं तथा ॥ ८४३ ॥
छत्रोपानत्सुमाल्यानि दक्षिणायनवासरे ।
वारिधानीश्च संपूर्णाः शीततोयेन मानद ॥ ८४४ ॥
सुश्वेतान् तुण्डलांश्चैव पक्वान्नं विविधं तथा ।
राजतानि च पात्राणि कनकाम्बुजवन्ति च ॥ ८४५ ॥
वस्त्राणि च विचित्राणि शुक्लोष्णीषयुतानि च ।
भक्त्या च विप्रवर्येभ्यो देयानि विधिवद्बुधैः ॥ ८४६ ॥

इति नीलमते दक्षिणायनकृत्यवर्णनम् ॥

नील उवाच ।

आषाढ्यां समतीतायां यदा स्याद्द्विजरोहिणी ।
तदा तु कश्यपः पूज्यो देशस्यास्य प्रवर्तकः ॥ ८४७ ॥
मरीचिना समायुक्तो मुनिवंशसमन्वितः ।
गन्धमाल्यादिनैवेद्यैर्ब्राह्मणानां च पूजनैः ॥ ८४८ ॥
यथा ते पूजितास्तृप्ता भवेयुर्द्विजसत्तम ।
वासोन्नदक्षिणाभिस्तु तथा कार्यं विचक्षणैः ८४९ ॥

---

१ त्रयोदश्यां च C. २ Lines 19–22 not in C, D. ३ Lines 25 to the 5th of page 70 not in B.

तृप्तेषु विप्रवर्येषु प्रीतो भवति कश्यपः ।
मरीचियुक्तो देशस्य वृद्ध्यै भवति सत्तम ॥ ८५० ॥
तस्मिन्नहनि रोहिण्यः पूजनीयाः सवत्सकाः ।
तृणं देयं तु विधिवत्ताभ्योऽन्नं परिकल्पितम् ॥ ८५१ ॥

इति नी० श्रावणमासे रोहिणीसंयोगः ॥

नील उवाच ।

ततस्तु श्रावणीं प्राप्य वितस्तासिन्धुसंगमे ।
स्नात्वा संपूजनं कृत्वा देवदेवस्य शार्ङ्गिणः ॥ ८५२ ॥
वाचयित्वा द्विजान् स्वस्ति क्रीडितव्यं यथाविधि ।
विशेषवच्च भोक्तव्यं तत्र वै द्विजपुंगव ॥ ८५३ ॥
सामध्वनिश्च श्रोतव्या तस्मिन्नहनि काश्यप ।
क्रीडितव्यं विशेषेण कुमारीभिस्तथा जले ॥ ८५४ ॥
श्रवणर्क्षमनुप्राप्ते चन्द्रमस्यथ काश्यप ।
स्नातस्य श्रवणे पुष्टिः सर्वस्मिन् सर्वदा भवेत् ॥ ८५५ ॥
[1]एष योगो ध्रुवस्तेऽद्य मयोक्तो द्विजसत्तम ।
मासे मासे च कर्तव्या सर्वसिद्धिमवाप्नुयात् ॥ ८५६ ॥

इति नी० श्रावणीवर्णनम् ॥

नील[2] उवाच

श्रावण्यां समतीतायां या स्यात्कृष्णाष्टमी द्विज ।
तस्यामुत्पद्यते देवो मानुषो मधुसूदनः ॥ ८५७ ॥
वराहावतारणार्थं हि (भवभारापहारार्थं) तस्यां तु द्विजसत्तम ।
अष्टाविंशे च संप्राप्ते द्वापुरान्ते इति श्रुतम् ॥ ८५८ ॥
तत्राहनि तु कर्तव्यं तस्मात्कालात्सदा परम् ।
पूजनं देवदेवस्य देव्याश्चैव यथाविधि ॥ ८५९ ॥
देवकी च यशोदा च तदा पूज्ये द्विजोत्तम ।
गन्धैर्माल्यैस्तथा भक्ष्यैर्यवगोधूमसम्भवैः ॥ ८६० ॥
सगोरसैर्भक्ष्यभोज्यैः फलैश्च विविधैस्तथा ।
एवं सम्पूजनं कृत्वा रात्रौ कुर्यान्महोत्सवम् ॥ ८६१ ॥
वाजि (रात्रि) जागरणं कार्यं नवम्यां द्विजसत्तम ।
अनर्काभ्युदिते काले स्त्रियः कौसम्बवाससः ॥ ८६२ ॥

---

१ Lines 15, 16 not in C, D. २ Lines 18 to 5th. of page 71 not in B.

नदीतीरे शुभे रम्ये विविक्ते सरसेऽथवा (?) ।
नयेयुः प्रतिमाः सर्वा गीतवाद्यैर्मनोहरैः ॥ ८६३ ॥
तस्मिन्नहनि भोक्तव्यं भोजनं यवसम्भवम् ।
गुडमिक्षुविकारैश्च मरिचैश्च घृतेन च ॥ ८६४ ॥

इति नी० भाद्रकृष्णाष्टम्यां कृष्णजन्माहवर्णनम् ॥

नील उवाच

ततः पञ्चदशीं प्राप्य कृष्णां पितृसंयुताम् ।
पितॄणां तर्पणं कार्यं श्राद्धं कार्यं प्रयत्नतः ॥ ८६५ ॥
स्वभास्वतो बर्हिषदश्चाग्निष्वात्ता स्तथैवच ।
क्रव्यादश्चो पहूतश्च आज्यपश्च सुकालिनः ॥ ८६६ ॥
सर्वे पितृगणाः पूज्याः पुष्पधूपानुसंपदा ।
तिलैः कार्यं प्रयत्नेन श्राद्धं तस्मिन् द्विजोत्तम ॥ ८६७ ॥

इति नीलमते मघामावसीवर्णनम् ॥

नील उवाच ।

प्रोष्ठपादस्य मासस्य शुक्लपक्षे दिने दिने ।
पूजनीयो महेन्द्रश्च सतीदेवी तथैवच ॥ ८६८ ॥
पटे कृत्वा तयोरर्चां यथाशक्त्या द्विजोत्तम ।
दैवज्ञोक्तविधानेन पूजा कार्या महीक्षिता ॥ ८६९ ॥
ब्राह्मणनां तु कर्तव्यं पूजनं गोन्नदायिना ।
भक्ष्यैः रत्नैः फलैर्मूलैः स्वर्णै र्वस्त्रैश्च धूपकैः ॥ ८७० ॥
पात्रैश्च विविधैर्भावभक्तिश्रद्धापुरस्सरम् ।
महेन्द्रः सगणः पूज्यः सायुधश्च सवाहनः ॥ ८७१ ॥
इन्द्रपक्षस्य या मध्ये शुक्ला ब्राह्मणपञ्चमी ।
तस्यां मे[3] पूजनं कार्यं गन्धधूपानुसंपदा ॥ ८७२ ॥
माल्यवस्त्रोपहारैश्च वह्निब्राह्मणतर्पणैः ।
प्रेक्षादानैश्च विविधैर्भूमिशोभाभिरेव च ॥ ८७३ ॥
तस्मिन्नहनि कर्तव्यं स्थाने नागस्य चाप्युत ।

इति श्रीनील० भाद्रशुक्लकृत्यवर्णनम् ।

नील उवाच ।

ततस्त्वनन्तरं पक्षे श्राद्धं कार्यं दिने दिने ॥ ८७४ ॥

---

१ ष—C. २ Line 21 not in C, D. ३ सं—C.

चतुर्दशीं वर्जयित्वा श्यामाकैश्च विशेषतः ।
शस्त्रेण निहता येतु तेभ्यो धर्म्या चतुर्दशी ॥ ८७५ ॥
सर्वपक्षं भवेच्छ्राद्धमेवमेवाह केशवः ।
त्रिभागहीनं पक्षं वा त्रिभागं चान्त्यमेव वा ॥ ८७६ ॥
वित्तशक्त्या तु कर्तव्यं त्रयोदश्यां सदैव हि ।
परपाकरतिर्योवै योपि चैवाधनो भवेत् ॥ ८७७ ॥
कर्मजीवी भवेद्यो वै तेनापि द्विजपुंगव ।
यथा कथंचिच्छ्राद्धं तु कर्तव्यं स्यात् त्रयोदशीम् ॥ ८७८ ॥
अत्र गाथा पितृगीता निबोध गदतो मम ।
अपि नः स्वकुले कश्चिद्यो न दद्यात् त्रयोदशीम् ॥ ८७९ ॥
पायसं मधुसंयुक्तं वर्षासु च मघासु च ।

इति श्रीनीलमते श्राद्धपक्षवर्णनम् ॥

नील उवाच

धान्ये पक्के सिते पक्षे दिने दैवज्ञचोदिते ॥ ८८० ॥
देवान्पितॄन् समभ्यर्च्य जलमग्निं द्विजान् तथा ।
द्विजातिपूजनं कृत्वा दैवज्ञस्य च पूजनम् ॥ ८८१ ॥
नववस्त्रपरिधानः स्वनुलिप्तः स्वलंकृतः ।
स्रग्वी पूर्वमुखः शुक्लो ब्रह्मघोष पुरस्सरः ॥ ८८२ ॥
शृण्वन् वादित्रघोषं च गीतशब्दं तथैव च ।
मण्डलं रुचिरं कृत्वा भूमौ पट्टे पुटेपि वा ॥ ८८३ ॥
मध्ये ब्रह्माणमालिख्य तथानन्तं च भोगिनम् ।
ततो लिखेच्च दिक्पालान् स्वां स्वां दिशमवस्थितान् ॥ ८८४ ॥
तेषां तु पूजनं कार्यं धूपमाल्यानुलेपनैः ।
वस्त्रैः रत्नैः फलैर्भक्ष्यैर्वह्निब्राह्मणतर्पणैः ॥ ८८५ ॥
गुडोपेतास्तथा धानाः सर्वसस्यसमुद्भवाः ।
ब्राह्मणानां प्रदातव्या भृत्यबन्धुजनस्य च ॥ ८८६ ॥
स्वयं च धाना भोक्तव्याः रात्रौ न तु दिवा बुधैः ।
दिवा धानासु वसतिः रात्रौ च दधिसक्तुषु ॥ ८८७ ॥
अलक्ष्मीः कोविदारेषु कपित्थेषु च सर्वदा ।

इति नी० नवान्नविधान वर्णनम् ॥

---

१ शक्रेण C. २ Lines 14-30 not in B.

नील उवाच ।

[१]मासे भाद्रे सिते पक्षे या चतुर्थी द्विजोत्तम ॥ ८८ ॥
शिवाख्यासौ विनिर्दिष्टा शिवलोकफलप्रदा ।
तस्यां विशेषतो देयं ब्राह्मणानां सुभोजनम् ॥ ८९ ॥
गणेशप्रीतये चापि मोदकाः स्वर्णभूषिताः ।
तस्यां दानं तथा स्नानं जपपाठादिकं तथा ॥ ९० ॥
विधेयं धनमिच्छद्भिर्धनदाख्येयमीरिता ।
ध्रुवेयं कथिता विप्र चतुर्थीष्वखिलास्वपि ॥ ९१ ॥
गणेशपूजनाद्भक्त्या शुभाप्तिर्नात्र संशयः ।
अत्र चन्द्रं न पश्येत रात्रौ धीमान् कथंचन ॥ ९२ ॥
मिथ्याभिशस्तिदोषेण विशेषाच्च जलस्थितम् ।
प्रमादद्दष्टौ च सुधीः............तिष्यके ॥ ९३ ॥
महीभारावतारार्थं भगवान् संभविष्यति ।
तस्य मिथ्याभिशस्तौ च निष्कृतिरुदिता किल ॥ ९४ ॥
तमिमं च पठेच्छ्लोकं मिथ्यादोषप्रशान्तये ।
सिंहः प्रसेन मवधीत् सिंहो जाम्बवता हतः ॥ ९५ ॥
सुकुमारक मा रोदीस्तव ह्येष स्यमन्तकः ।

इति श्री नी० धनदा चतुर्थी वर्णनम् ।

तामेव पञ्चमीं प्राप्य पूज्यो देवो जलेश्वरः ॥ ९६ ॥
पूजनीया उमादेवी[२] यथा तु धनदस्तथा ।
[३]अस्यां विशेषतो विप्र पुज्योऽसौ धनदो बुधैः ॥ ९७ ॥
स्नानमाल्यानुलेपैश्च पक्वान्नैर्बलिभिस्तथा ।
वितानशोभिते चापि मण्डले समलंकृते ॥ ९८ ॥
धनदाख्यं मम प्रीत्यं [?] गिरिराजं समर्चयेत् ।
सुवर्णकलशस्थां च लक्ष्मीं संपूजयेद्बुधः ॥ ९९ ॥
वस्त्रैः गोभिश्च कटकैस्तथालंकारचन्दनैः ।
ब्राह्मणान् तोषयेद्भक्त्या मधुरान्नैश्च पण्डिताः ॥ १०० ॥
ततो विज्ञापयेत् सम्यक् गिरिराजं मम प्रियम् ।
गिरिराज नमस्तेस्तु नीलाभिमत सत्प्रिय ॥ १०१ ॥
भक्त्या समार्चितोऽस्माभिः सर्वकामप्रदो भव ।

१ Lines 2–17 not in C, D. २ स देव्या तु C, D. ३ Lines 21–30 not in C, D.

इति नी० वरुणपञ्चमीवर्णनम् ।

नील उवाच ।

तामेव षष्ठीं सम्प्राप्य स्नापनीयाः कुमारिकाः ॥ १०२ ॥
अलङ्कृतास्तु कर्तव्याः प्रापितामेव सप्तमीम् ।
आत्मपूजा जनैः कार्या स्त्रीणां बालजनस्य च ॥ १०३ ॥
ततस्तामष्टमीं प्राप्य क्रीडितव्यं यथासुखम् ।
सिन्धूरकर्दमाक्राङ्गैर्नृत्तगीतपुरस्सरैः ॥ १०४ ॥
स्नात्वा संपूजनीया तु देवी नाम्नात्वशोकिका ।
शय्यासनं निवेद्यं च सोत्तरच्छादनं शुभम् ॥ १०५ ॥
पुष्पार्घधूपनं सर्वं भोक्तव्यं गुडसंयुतम् ।
उमायाः पूजनं कार्यं तस्यां सौभाग्यमीप्सुना ॥ १०६ ॥
धूपार्घ दीपमाल्यैश्च भुञ्जीतान्नं गुडान्वितम् ।
कुसम्बलवणाद्यैश्च कुसुमाञ्जनकंकणैः ॥ १०७ ॥
आराममथ गत्वा तु तोयवृक्षोपशोभितम् ।

इति नी० अशोकिकाष्टमी ॥

नील उवाच ।

अस्यामेव नवम्यां तु दुर्गां तां नन्दिकाभिधाम् ॥ १०८ ॥
पूजयन् विधिवद्भक्त्या सर्वान् कामानवाप्नुयात् ।
नृत्तवादित्रगीतैश्च महोत्सवसमन्वितम् ॥ १०९ ॥
नन्दां संपूजयेद्विद्वान् प्राप्नोति परमं पदम् ।
गुडापूपैश्च नैवेद्यमर्पयेत् प्रयतः पुमान् ॥ ११० ॥
गोधूमं चापि विप्रेभ्यो दत्वाऽनन्त्यमवाप्नुयात् ।
स्वयं गोधूमभक्ष्यं च भक्षयित्वा शुचि र्नरः ॥ १११ ॥
पुण्यान् लोकानवाप्नोति नन्दिकायाः प्रसादतः ।

इति श्री नी० गोधूमनवमी वर्णनम्

नील उवाच ।

ततस्तोये तु वैतस्ते स्नातव्यं दिनसप्तकम् ॥ ११२ ॥
दशम्यादौ द्विजश्रेष्ठ यताहारेण स्वादुना ।
वितस्ताजन्मादिवसात् त्र्यहात्पूर्वं परं त्र्यहात् ॥ ११३ ॥

१ Lines 3-15 not in B. २ Lines 17-25 not in C, D.
३ धेनुपञ्चकं D.

वितस्ताजन्मदिवसं तां च ब्रह्मन् त्रयोदशीम् ।
पूजनीया वितस्ता स्यात् तथा तद्दिन[1]सप्तकम् ॥ ६१४ ॥
गन्धैर्माल्यैः सनैवेद्यैः दीपैर्धूपैश्च शोभनैः ।
[2]मालिकाभिर्विचित्राभिः रक्तसूत्रैः सकङ्कणैः ॥ ६१५ ॥
फलैश्च विविधैर्ब्रह्मन् वन्हिब्राह्मणतर्पणैः ।
कर्तव्यं स्याद्विशेषेण वितस्तासिन्धुसंगमे ॥ ६१६ ॥
वितस्ताजन्मदिवसाद्यादूर्ध्वं च दिनत्रयम् ।
प्रेक्षादानं च कर्तव्यं [3]तर्पणीया द्विजातयः ॥ ६१७ ॥

इति श्री नी० वितस्तोत्सवः ॥

नील उवाच ।

वितस्तोत्सवमध्ये च शुक्ला या द्वादशी द्विज ।
सोपवासो हरिं त[4]त्र पूजयेत विचक्षणः ॥ ६१८ ॥
एषा ध्रुवा विनिर्दिष्टा शेषा कार्या नवा द्विज ।
महत्यसौ विनिर्दिष्टा द्वादशी सर्वदा शुभा ॥ ६१९ ॥
द्वादशी बुधयुक्तासा महत्यपि प्रकीर्तिता ।
तस्यां जपं तथा स्नानं दानं श्राद्धादिकं तथा ॥ ६२० ॥
प्रोक्तवान्द्वादशगुणं स्वयं मे मधुसूदनः ।
बुधश्रवणसंयुक्ता द्विज सा द्वादशी यदि ॥ ६२१ ॥
[5]अत्यन्तं रोहिणी नाम तस्यां सर्वमथाक्षयम् ।
तस्यां स्नात्वा नरः सम्यक् नदीद्वितयसंगमे ॥ ६२२ ॥
फलमाप्नोति यत्प्रोक्तं सन्निहित्यां रविग्रहे ।
उपानहौ तथा छत्रं [6]पूजाकुम्भं तथैव च ॥ ६२३ ॥
वस्त्रयुग्मं तथा नद्यां यः प्रयच्छति वै तथा ।
शेषाणां [7]चापि चेत्कर्ता श्वेतद्वीपे महीयते ॥ ६२४ ॥

इति श्री नील० भाद्रद्वादशीवर्णनम् ।

सैव चेच्छ्रवणोपेता द्वादशी विप्रसत्तम ।
[8]तस्यां नियममादाय हरिं पूजयते च यः ॥ ६२५ ॥

---

१ पञ्चकं C, D. २ स्नानकाभिः C. ३ पूजनीयाः नटादयः C, D. ४ देवं C, D. ५ अनन्तमहती नाम D; अत्यन्तमहती नाम C. ६ पूर्ण-C, D. ७ यदि C. ८ Line 27 not in C, D.

तस्य स्युरिच्छया[1] लोका यावदिन्द्राश्चतुर्दश ।
तस्मिन्नहनि संस्थाप्य[2] वितस्तासिन्धुसंगमे[3] ॥ ६२६ ॥
[4]मृद्ग्राह्या स्नानकाले तु स्नातव्यं सततं तथा[5] ।
सङ्गमस्नानजं पुण्यं तेनाप्नोति नरः सदा ॥ ६२७ ॥

इति श्री नीलमते महाद्वादशीवर्णनम् ॥

नील उवाच ।

श्राद्धपक्षस्य मध्ये च चतुर्थ्यां द्विजसत्तम ।
दिक्पालपूजनं कार्यं प्रौष्ठपद्यां तथा[6] बुधैः ॥ ६२८ ॥
[7]मण्डलं विधिवत्कृत्वा तत्रार्चां विनिवेशयेत् ।
क्रमेण पूजयेद्धीमान् दिक्पालान् स्वार्थसिद्धये ॥ ६२९ ॥

इति श्री नील० श्राद्धपक्षचतुर्थीवर्णनम् ।

[8]ततश्च नवमी या स्यात् कृष्णपक्षे द्विजोत्तम ।
तत्र गौरी सदा पूज्या भक्ष्यैर्नानाप्रकारितैः ॥ ६३० ॥

इति श्री नी० अश्विन कृष्णनवमी वर्णनम् ।

नील उवाच ।

[9]अस्यामेव नवम्यां तु दुर्गां देवीं प्रपूजयेत् ।
आयुधानि च पूज्यानि रात्रौ दुर्गागृहे तथा ॥ ६३१ ॥
स्नात्वा प्रभाते संपूज्य सर्वान्युक्तानि काश्यप ।
भुक्त्वा तु शान्तिः कर्तव्या किंचिद्दृष्टे दिवाकरे ॥ ६३२ ॥
नीराजनाख्या विज्ञेया शालिहोत्रविचक्षणैः ।
ज्योतिषां पालका ये च कल्पेष्वाथर्वणेषु च ॥ ६३३ ॥
अतः परं पूजनीया जना ये रङ्गजीविनः ।

इति श्री नील० अश्विनकृष्णे [10]नीराजननवमीवर्णनम् ॥

कन्यामध्यमनुप्राप्ते सहस्रकिरणे द्विज ॥ ६३४ ॥
राज्यन्ते सोपवासेन पूज्योऽगस्त्यो मुनिर्भवेत् ।
[11]पूर्णकुम्भैः सकूष्माण्डैः (?, यवैर्धान्यैर्घृतेन च ॥ ६३५ ॥
जातिपद्मोत्पलैः श्वभ्रैश्चन्दनेन सितेन च ।
धेन्वा वृषेण वस्त्रैश्च रत्नैः सागरसंभवैः ॥ ६३६ ॥

---

१ इच्छा तु C, D. २ संस्नाप्य B; संमाप्य C. ३ संगमात् C, D. ४ मृतिकास्नानकालेतु C, D. ५ मया C, D. ६ सदा D. ७ Lines 9, 10 not D. ८ Lines 12, 13 not in D. ९ Line 16 not in D. १० मध्या-C. ११ पूजा-A, B.

छत्त्रोपानत्सुदण्डैश्च पादुकाभिस्तथैव च ।
भूरिणा परमान्नेन फलैर्मूलैः सुशोभनैः ॥ ९३७ ॥
अन्नप्रकारैर्भक्ष्यैश्च वह्निब्राह्मणपूजनैः ।
अगस्त्यपूजां कृत्वैव दैवज्ञं पूजयेत्तदा[1] ॥ ९३८ ॥
तेन सन्दर्शितं पश्येत् तदाऽगस्त्यं महामुनिम् ।
कामानभीष्टानाप्नोति दृष्ट्वागस्त्यं मुनिं नरः ॥ ९३९ ॥

नील उवाच ।

अथाश्वयुक्चतुर्थ्यां तु देव[2]पूजा विधीयते ।
नवम्युक्तविधानेन सर्वोपकरणादिना ॥ ९४० ॥
पूज्याश्च सुभगास्तत्र याश्च नार्यः पतिव्रताः ।
यासां जीवन्ति नाथाश्च श्वश्रूप्रभृतयश्च यत् ॥ ९४१ ॥
यथैवाश्वयुजे मासि तथा माघे च पूजयेत् ।
यथा माघे तथा ज्येष्ठे चतुर्थीत्रितयं सदा[3] ॥ ९४२ ॥

इति श्री नी० चतुर्थीत्रितयम् ॥

आश्विनस्य[4] सिते पक्षे स्वातिना[5] संगतः शशी ।
यदा तदोच्चैःश्रवसः पूजा कार्या प्रयत्नतः ॥ ९४३ ॥
पूजनीयाश्च तुरगा यदि स्यान्नवमी द्विज ।
शान्त्यै स्वस्त्ययनं कार्यं तदा तेषां दिने दिने ॥ ९४४ ॥
धान्यं बलातुकं कुष्ठं वचसिद्धार्थकानि च । (?)
पञ्चरंगेण सूत्रेण कण्ठे[6] बध्नीत पंडितः ॥ ९४५ ॥
वायव्यै वारुणैः सौरैः शाक्रैर्मन्त्रैश्च वैष्णवैः ।
वैश्वदेवैस्तथाग्नेयैः होतव्योऽग्निर्दिने दिने ॥ ९४६ ॥
तुरगा यन्त्रणीयाश्च पुरुषैः शस्त्रपाणिभिः ।
ताडनं वाहनं चैव तदा तेषां वि[7]वर्जयेत् ॥ ९४७ ॥

इति श्री नी०, अश्वदीक्षावर्णनम् ॥

नील उवाच

ततः शक्रमनुप्राप्ते नक्षत्रं तु निशाकरे ।
कुमुदैरावणोत्पलपुष्पदन्तोथ वामनः ॥ ९४८ ॥

---

१ ततः C. २ देवी A, B. ३ तदा C, D. ४ आश्वयुज्यां शुक्लपक्षे C.
५ स्वामिना A. ६ तथा C. ७ विसर्जयेत् C, D.

सुप्रतीकोऽञ्जनो नील पूजनीया गजोत्तमाः ।
नमस्कृत्य यथाप्रोक्तं विधिं नागेषु कारयेत् ॥ ६४९ ॥

इति श्री नी० हस्तिदीक्षावर्णनम् ॥

नील उवाच ।

ततोऽष्टम्यां पूजनीया भद्रकाले यथाविधि ।
आमिषै[1]र्विविधैः शाकैर्वह्निब्राह्मणतर्पणैः ॥ ६५० ॥
बिल्वपत्रैस्तथा सम्यक् चन्दने[2]न घृतेन च ।
पानकैर्विविधाकारैः स[3]म्यक् चापि पृथग्विधैः ॥ ६५१ ॥
भूशोभाभिश्च र[4]म्याभिर्निर्मिताभिश्च शिल्पतः ।
नृत्तगीतैश्च वादित्रैः रात्रिजागरणेन च ॥ ६५२ ॥
दुर्गागृहे पुस्तकानां पूजा कार्या तथा द्विज ।
स्वकानां शिल्पभाण्डानां कार्या शिल्पजनेन च ॥ ६५३ ॥
वाद्यभाण्डानि धा[5]न्यानि कवचास्त्राणि चैव हि ।
आयुधानि च संहृष्टो मङ्गलालम्बपूर्वकम् ॥ ६५४ ॥
[6]पूजयित्वा यथाचारं भाण्डजातं विचक्षणः ।
प्राश्नीयाद्दधिसंयुक्तं ब्राह्मणनापि मंत्रितम् ॥ ६५५ ॥
आश्रितापाश्रितान्मिश्रैं[7] फलवद्भिर्द्रुमैस्तथा ।
पूजनीयाश्च कर्तव्या त्रिभिर्गत्वा फलद्रुमाः ॥ ६५६ ॥
अभ्यर्च्य विधिना तं च प्रार्थयेद्युर्मनीषितम् ।
देवीं संपूज्य पुष्पादिधूपदीपानुसंपदा ॥ ६५७ ॥
दत्वान्नपिंडं श्ये[8]नस्य तेन पिण्डोऽभिनन्दितः ।
शुभा[9]य गदितो नित्यं फलशास्त्रविचक्षणैः ॥ ६५८ ॥
सुहृत्संबन्धिविप्राणां तथा ऽऽश्रितजनस्य च ।
दातव्यं भोजनं विप्र वसन्तेऽथ शरद्यपि ॥ ६५९ ॥
अष्टम्यां वा चतुर्थ्यां वा चतुर्दश्यां तथैवच ।
नवम्यामथ दातव्यं शुक्लपक्षेऽथ[10]वोत्तरे ॥ ६६० ॥

---

१ Following lines occur only in C, D:–
उपोषिते वस्त्रधूपैर्माल्यैर्वस्त्रादिभिस्तथा । दीपैः रत्नैस्तथा भक्ष्यैः फलैर्मूलैस्तथैव च ॥
२ नामृतेन च C, D. ३ सस्यैः शिल्पिजनैस्तथा C, D. ४ रम्याभिः....... शिल्पतः not in C. ५ चान्यानि C. ६ Line 15 not in C, D. ७ मिश्रान् C. ८ श्वेनस्य D. ९ Line 22 not in C, D. १० नेतरे C.

यस्यां[1] पूजा कृता देव्याः तस्या भोक्तव्यमग्रतः ।
इति श्री नी० भद्र[2]कालीपूजावर्णनम् ।

नील उवाच ।

एवमेव प्रदातव्यं गृहदेव्या विचक्षणैः ॥ ६६१ ॥
ब्रह्मन् संवत्सरस्यादौ श्येनपिण्ड विवर्जितम् ।
तच्च देयं गृहे विप्र नतु वृक्षे कथंचन ॥ ६६२ ॥

इति श्री नी० गृहदेवी पूजावर्णनम् ।

नील उवाच

यदा पक्वो भवेत् द्राक्षावाटोजश्च शोभनः ।
[3]तदा स्नातानुलिप्तेन धौतवस्त्रेण चानघ ॥ ६६३ ॥
गन्तव्यं स्त्रीसहायेन भृत्यमित्रान्वितेन च ।
स्नातेन स्वांगरागेण स्रग्विना च सुवाससा ॥ ६६४ ॥
द्राक्षावाटं च संपूज्य श्यामां देवीं विधानतः ।
पुष्पधूपान्नभक्ष्याद्यैर्ब्राह्मणानां च तर्पणैः ॥ ६६५ ॥
कल्माषेण प्रभूतेन घृतेन मधुना तथा ।
ब्राह्मणानां च दातव्या द्राक्षा प्रथमतो द्विज ॥ ६६६ ॥
[4]यस्मात्ते भोजने तस्या नियुक्ता ब्राह्मणाः स्वयं ।
तद्विकारेण ते जातु नियुक्तव्या मनीषिभिः ॥ ६६७ ॥
ततस्तु पश्चाद्भुक्तव्या मृद्वीका बहुसंमता ।
कर्तव्यश्चोत्सवो ब्रह्मन् नृत्तगीतसमाकुलः ॥ ६६८ ॥
भोक्तव्यं[6] भोजनं चापि विधिना बहुसंमतम् ।
इति श्री नी० श्यामादि पूजावर्णनम् ॥

नील उवाच ।

प्रतिमासं तु पुष्येण राज्ञः स्नानं विधीयते ॥ ६६९ ॥
ज्योतिः शास्त्रविधानेन सर्वकामफलप्रदम् ।
जन्मार्क्षे च गते चन्द्रे सर्वैरेवं तथा द्विज ॥ ६७० ॥
चन्द्रपूजा च कर्तव्या नक्षत्रग्रहयोस्तथा ।
नक्षत्रदेवतायाश्च पुष्पधूपान्नसंपदा ॥ ६७१ ॥

---

१ यथा C. २ कार्तिकपूजा C, D. ३ Line 10 not in C, D. ४ द्विजोत्तम C. ५ Lines 17, 18 not in C, D. ६ Line 21 not in C, D. ७ तथा B.

विप्राग्निपूजनं कार्यमुत्सवगीतवादितैः ।
प्रतिसंवत्सरं कार्यः लक्षहोम महीक्षिता ॥ ९७२ ॥
कोटिहोमस्तथा कार्य एक एव द्विजोत्तम ।
तयोर्विधानं विज्ञेयं कल्पेष्वाथर्वणेषु च ॥ ९७३ ॥
नित्यान्येतानि कर्माणि निमित्तेषु पराणि च ।
कार्याणि सह संमन्त्र्य संवत्सरपुरोहितैः ॥ ९७४ ॥

इति श्री नी० राजकर्मविधिवर्णनम् ।

नील उवाच ।

अभिषेकान्हि कर्तव्यः प्रतिसंवत्सरं नृपैः ।
अभिषेको द्विजश्रेष्ठ यथापूर्वं तथा सदा ॥ ९७५ ॥
पुरोधाः सोपवासस्तु जुहुयाज्जातवेदसी ।
गणं चैव प्रतिरथं शब्दवर्षगणावुभौ ॥ ९७६ ॥
आयुषमभयं चैव तथा स्वस्त्ययनं परम् ।
वैष्णवानि च मन्त्राणि सूक्तानि च यथाविधि ॥ ९७७ ॥
सावित्रब्रह्मरौद्राणि वारुणानि तथैवच ।
नगरं च तथाकार्यं पताकाध्वजसंकुलम् ॥ ९७८ ॥
नीरजस्कास्तथा कार्या राजमार्गाः शुभैर्जलैः ।
पौरैः स्नातैः सुवस्त्रैश्च भाव्यं मङ्गलमालिभिः ॥ ९७९ ॥
गन्तव्यं वारमुख्याभिस्तथा राजनिवेशनम् ।
पौरमुख्यैस्तथा बाह्यैर्गणमुख्यैस्तथैव च ॥ ९८० ॥
शोभनीयं च नगरं मार्गाश्च नटनर्तकैः ।
राजा स्नात्वा पुनः स्नाप्य पंचगव्येन धार्मिकः ॥ ९८१ ॥
मृत्ताम्ररौप्यसौवर्णैः स्नापनीयास्तथा घटैः ।
तोयस्य पयसो दध्ना सर्पिषश्च तथा घटैः ॥ ९८२ ॥
शूद्रविट्क्षत्रविप्राणां गणमुख्यैर्यथादिशम् ।
पश्चाद्दक्षिणतः प्राक्च सौम्येन च यथाक्रमम् ॥ ९८३ ॥
स्नानकाले च कर्तव्यो महान् कोलाहलः शुभः ।
वादित्रशंखपुण्याह सूतवन्दिजनैः सह ॥ ९८४ ॥

---

१ संवत्सरस्याथ कार्यं C, . २ शैवानि D; शाक्तानि C. ३ राजमार्ग जलैः शुभैः C. ४ Line 17 not in C. ५ गणड C. ६ पुरः C ७ वस्तुरेण C, D. ८ कलकलं C, D.

सामन्तैस्तु तथा भाव्यं छत्रचामरपाणिभिः ।
राजा [1]स्नाप्यो मृत्तिकाभिर्यथाक्रमम् ॥ ६८५ ॥
[2]पर्वतोर्धमृदा राज्ञः शिरः संशोधयेत् बुधः ।
शोध्यौ कर्णौ च वल्मीकमृदा मन्त्रविदा बिदा ॥ ६८६ ॥
शत्रोःस्थानं (श्रोत्रस्थानं) मृदा चैव शोधनीया च कन्धरा ।
राजवेश्मगृहद्वारात् हृदयं तस्य शोधयेत् ॥ ६८७ ॥
देवालयमृदा पृष्ठं [3]दक्षिणं तु तथा भुजम् ।
गजदन्तोद्धृतमृदा वृषशृंगमृदा परः ॥ ६८८ ॥
[4]अश्वद्वारात् कुटीं चास्य ऊरूकमलिनीमृदा ।
पौरैः स्नातैः सुवस्त्रैश्च भाव्यं मङ्गलपाणिभिः ॥ ६८९ ॥
मृद्भिस्नातश्च सं[5]स्थाप्य राजा सर्वौषधीगणैः ।
सर्वगन्धैः सर्वरत्नैः सर्वबीजैस्ततः परम् ॥ ६९० ॥
सर्वपुष्पैः सर्वफलैः दूर्वागोरचनाङ्कुरैः ।
ततो भद्रासनगतं तीर्थतोयैः शुभा[6]म्बरैः ॥ ६९१ ॥
यथाशक्तिसमानीतैः पुरस्कृत्य पुरोहितम् ।
नृपतिः स्वाभिषेक्तव्यो दैवज्ञवचनान्तरैः ॥ ६९२ ॥
ब्राह्मणैः क्षत्रियै वैश्यैः शूद्रमुख्यैस्तथैवच ।
मुख्याभिर्वारमुख्यभिः वणिग्भिश्च यथोचितम् ॥ ६९३ ॥
ततः स्नातानुलिप्तांगः कृतदैवतपूजनः ।
आबद्धमुकटाः स्त्रग्भिर्बद्धपट्टविभूषणैः ॥ ६९४ ॥
मङ्गलालम्बनं कृत्वा दत्वा पूर्णाहुतिं ततः ।
पूजयेत धनौघेन दैवज्ञं सपुरोधसम् ॥ ६९५ ॥
यथाशक्ति द्विजान् चान्यानभयं चैव घोषयेत् ।
आगतान् स्थानगान् सर्वान् विसृज्येत [9]तथा पशून् ॥ ६९६ ॥
मोक्षयेद्बन्धनात् सर्वान् ऋते लोकस्य कण्टकान् ।
व्याघ्रचर्मोत्तरे रम्ये तथा सिंहासने शुभे ॥ ६९७ ॥
उपविश्य भवेद्राजा स्वयं गृहपुरोधसः ।
[10]उपविष्टममुं सम्यक् मङ्गलश्रुतिभिस्तदा ॥ ६९८ ॥

---

१ स्थाप्यो D. २ पूर्वतो C. ३ दक्षिणैश्च तथा भुजाः A. ४ वेश्वा C; वेश्याः D. ५ संस्नाप्य C. ६ शुभाम्बरम् A. ७ पुरोधसं C, D. ८ रत्न—C, D. ९ यथा C. १० Line 28 not in C.

सर्वाः[1] प्रकृतयश्चैनं पश्येयुः पूर्णपाणयः ।
[2]रत्नद्रव्यैर्यथोचित्यं तथा मङ्गलवस्तुभिः ॥ ९९९ ॥
छत्रायुधाद्यं संपूज्य गजसंघान् तुरङ्गमान् ।
आरुह्यालंकृतं नागं विसृजेत् धनसंचयान् ॥ १००० ॥
प्रक्रम्य नगरं सर्वं प्रविश्य च तथा गृहम् ।
सामन्तान् पौरमुख्यान् चाभ्यर्च्य हर्षा[3]द्विसर्जयेत् ॥ १००१ ॥

इति श्री नी० राज्ञः संवत्सराभिषेकवर्णनम् ॥

नील उवाच ।

नित्यं राज्ञा समुत्थाय पूजनीयाःसुरा द्विजाः ।
वह्निसंपूजनं कार्यं द्रष्टव्यं वदनं घृते ॥ १००२ ॥
श्रोतव्यं तिथिपत्रं[4] च कर्तव्यं वैद्यभाषितम् ।
[5]समागतेन द्रष्टव्यो व्यवहारस्तथा समः ॥ १००३ ॥
विमानना न कर्तव्या कस्यचिच्च कदाचन ।
[6]स्ववेदो रक्षितव्यश्च नित्यं ब्राह्मणपुंगव ॥ १००४ ॥
दुर्गत्वादस्य देशस्य परचक्रभयं विना ।
[7]स्वभेदेनेह नश्यन्ति बद्धमूला नराधिपाः ॥ १००५ ॥
अतीव च्छलिनो मर्त्या वसन्त्यत्र द्विजोत्तम ।
परलोकाद्भयं येषां नास्ति किंचन दुष्कृतम् ॥ १००६ ॥
अतीव निरतस्तस्मात्परस्पराविभेदने ।
समाधेयं ततो राज्ञा किं नु कुर्युरिमे जनाः ॥ १००७ ॥
नित्यं सन्निहिता देवा [8]अस्मिन् कश्मीरमण्डले ।
तेषां भक्तिः सदा कार्या नागानां च तथा द्विज ॥ १००८ ॥
[9]ब्राह्मणानां च सर्वेषां सरलशयताजुषाम् ।
पूज्याः पिशाचाश्च तथा बलिपूर्वेण कर्मणा ॥ १००९ ॥
देशा[10]नुसारः कर्तव्यो जनः कार्यः स्वधिष्ठितः ।
आगतश्च जनः सर्वः पूजनीयो दिगन्तरात् ॥ १०१० ॥
दण्डापराधप्रतिमः कार्यः सर्वस्य काश्यप ।
नोग्रदण्डो भवेद्राजा क्षमेत च न कस्यचित् ॥ १०११ ॥

---

१ पश्येरन् प्रकृतिः सर्वा स्वयं मङ्गलपाणयः C, D. २ Line 2 not in C, D. ३ धनेन D. ४ नक्षत्रे C, D. ५ सभामतेन C. ६ स्वभेद C. ७ Lines 16–20 not in C, D. ८ कश्मीरामण्डले द्विज D. ९ Line 23 not in C, D. १० देशानुकारः C, D.

कारयेत तथा राज्यं राजशास्त्रोपदेशतः ।

इति नी० राजधर्मवर्णनम् ॥

नील उवाच ।

निकुम्भे निर्गते ब्रह्मन् तथा चैवाप्यनागते ॥ १०१२ ॥
षण्मासमध्ये कर्तव्या यात्रा देवगृहे नृपैः ।
[1]संवत्सरे सदा कार्यो देवतानां गृहे गृहे ॥ १०१३ ॥
यात्रोत्सवः यथा ब्रह्मन् तथा मे गदतः शृणु ।
विनायकगृहे यात्रा चतुर्थ्यां संप्रशस्यते ॥ १०१४ ॥
[2]कार्तिकेयालये षष्ठ्यां सप्तम्यां सवितुस्तथा ।
दुर्गागृहे नवम्यां च पंचम्यां श्रीगृहे तथा ॥ १०१५ ॥
अष्टम्यां वा चतुर्दश्यां महादेवनिवेशने ।
[3]पंचमी द्वादशी चैव पूर्णमासीतथैवच ॥ १०१६ ॥
सर्वेषामेव नागानां यात्रा कर्माणि पूजिता ।
शुक्लपक्षदशी शस्ता सर्वदेवेषु काश्यप ॥ १०१७ ॥
सर्वासु कार्यं तिथिषु तथाऽतिथिनिवेशने ।

[4]ईति नी० देवयात्राऽतिथिपूजा वर्णनम् ॥

नील उवाच ।

यात्रां तु कर्तुकामेन पूर्वमेव दिने शुभे ॥ १०१८ ॥
विनायकपतिपूजा कर्तव्या मोदकोत्करैः ।
द्वितीयेऽहनि कर्तव्या गृहशान्ति स्तथा [5]मुदा ॥ १०१९ ॥
तृतीयेऽहनि कर्तव्यं [6]गन्धर्वाणां च पूजनम् ।
[7]चतुर्थेऽहनि कर्तव्यं पिशाचानां च पूजनम् ॥ १०२० ॥
पंचमेऽहनि कर्तव्यं [8]स्थाननागस्य पूजनम् ।
षष्ठेऽहनि च कर्तव्यं ब्राह्मणानां च पूजनम् ॥ १०२१ ॥
सप्तमेऽहनि कर्तव्यं दीनानाथजनस्य च ।
एवं तु यजनं कृत्वा यथावद्दिनसप्तकम् ॥ १०२२ ॥
ततस्तु स्नापनं कार्यं विधिना येन तच्छृणु ।
सुधावदातं कर्तव्यं चित्रितं देवतागृहम् ॥ १०२३ ॥

---

१ संवत्सरं सकृत्कार्यं C, D. २ षष्ठ्यां कुमारस्य गृहे C, D. ३ पञ्चमी-द्वादशीम्.........D. ४ Line 16 not in C. ५ परम् C, D. ६ पिशाचानां D. ७ Line 22 not in D. ८ स्नानं C, D.

आचारैश्च पूर्वं तु कुसुमोत्कर मोदितम्[2] ।
ततोऽर्चा स्नापनं कार्यं कल्पशाखानुसारतः[3] ॥ १०२४ ॥
पुण्याहगीतघोषेण सुभगानर्तनेनच ।
ततोऽर्चा स्नापनस्यार्थे पौरै नृत्तपुरस्सरम्[4] ॥ १०२५ ॥
आनेतव्यं च महता विभवेनोदकं शुभम् ।
तीर्थात्सन्निहिताद्राजन् गजपृष्ठेऽधिरोहितम्[5] ॥ १०२६ ॥
अश्वयानेऽथ गोयाने नरयानेऽथवा पुनः ।
प्रतिमां तेन संप्लाव्य स्नापयेत यथाविधि ॥ १०२७ ॥
राजाभिषेककथितः कार्यश्च नगरे विधिः ।
प्राप्ते ऽथ यात्रादिवसे कूटागारं तु कारयेत् ॥ १०२८ ॥
वस्त्रैर्माल्यै स्तथा रत्नैः पताकाभिरलंकृतम् ।
आरोप्य प्रतिमां तत्र तत्स्वरूपां तथा पराम् ॥ १०२९ ॥
कूटागारश्च वोढव्य स्तुरगैर्गोभिरेव वा ।
बलिभिः पुरुषैर्वापि माल्यवस्त्राभ्यलंकृतः[6] ॥ १०३० ॥
नृपेण सोऽनुगन्तव्यः सबलेनाथ पृष्ठतः ।
प्रधानेन च कर्तव्यं नृपहीने तथा परे[7] ॥ १०३१ ॥
धूपपूजा प्रदातव्या स्थाने स्थाने तथा परैः ।
क्ष्वेडितो[8]त्कृष्टशब्दैश्च जयवाद्यस्वनै स्तथा ॥ १०३२ ॥
पथा समेन नगरं भ्रामयेत्[9] कोटिमन्दिरम् ।
ततः प्रवेश्य प्रतिमां देववेश्मनि काश्यप ॥ १०३३ ॥
महान् उत्सवः कार्यः (?) गीतनृत्तसमाकुलम् ।
द्वितीयेऽहनि दातव्या प्रेक्षा रङ्गोपजीविनः ॥ १०३४ ॥
तेषां शक्त्या धनं देयं मल्लादीनां द्विजोत्तम ।
प्रेक्षाकाले च कर्तव्यं प्रेक्षकाणां च भोजनम् ॥ १०३५ ॥
मनुष्याणां द्विजश्रेष्ठ ताम्बूलकुसुमादिभिः ।
ओदनं विकिरेद्भक्त्या सपुष्पं धूपसंयुतम् ॥ १०३६ ॥
भूतानां खल्वदृश्यानां प्रेक्षकाणां द्विजोत्तम ।

इति नीलमते देवयात्रोत्सवनर्णनम्[10] ॥

---

१ एवं तु यजनं कृत्वा C, D. २ भूषितं C, D. ३ विधानतः C, D. ४ पुरस्सरैः D. ५ रोहणम् C, D. ६ लंकृतैः C. ७ तथा पुरे C. ८ क्षोभितो D. ९ भ्राम्येत् कूटगृहं शुभम् C, D. १० फल C, D.

बृहदश्व उवाच ।

इत्युक्तवान् स नागेन्द्रो ब्राह्मणं तं यशस्विनम् ॥ १०३७ ॥
एतत् प्रयत्नात् कर्तव्यं आरोग्यायुर्धनेप्सुभिः ।
वित्तशक्त्या करिष्यन्ति ये जना नीलभाषितम् ॥ १०३८ ॥
तेषामारोग्यमायुश्च धनं च भविता बहु ।
देहभेदे गमिष्यान्ति देवलोकं न संशयः ॥ १०३९ ॥
पुत्रपौत्रास्तथैतेषां स्वर्गायुर्धनभागिनाम् ।
भविष्यन्त्यायुषोपेता नात्र कार्या विचारणा ॥ १०४० ॥
तवापि विदितं राजन् सकलं नीलभाषितम् ।
[1]लोके देशेऽधिकमतः श्रुत्वा कुरु यथासुखम् ॥ १०४१ ॥
कालदोष[2]समुच्छिन्नं यत्किंचिन्नीलभाषितम् ।
तत्सर्वं कुरु राजेन्द्र मम वाक्येन मानद ॥ १०४२ ॥
क्रियेत[3] नो चेत्तद्वाक्यं भवतीहोदकप्लवः ।
अतिवृष्टिरनावृष्टिर्दुर्भिक्षमरणे तथा ॥ १०४३ ॥
अकाले राजमरणं राजदण्डश्च दारुणः ।
हिमस्यैव प्रपतनं भूरि चैवोपजायते ॥ १०४४ ॥
तस्माच्छ्राव्यं तु लोकानां बहुशो नीलभाषितम् ।
तत्कर्तारो भविष्यन्ति पशुधान्यधनैर्युताः ॥ १०४५ ॥
त्वं चापि विजयी शश्वत्सर्वत्रैव भविष्यसि ।

[4]इति नी० गोनन्दानुशासनम् ॥

वैशम्पायन उवाच ।

एवमुक्तः स गोनन्दो बृहदश्वेन भूमिप ॥ १०४६ ॥
प्रावर्तयत् समुच्छिन्नानाचारान् कालदोषतः ।
[5]ततः स बलभद्रेण मथुरायां निपातितः ॥ १०४७ ॥
नीलोक्तं[6] सकलं राजा काश्मीरो वचनं युधि ।
करोति काले मरणं नैव तस्योपजायते (?) ॥ १०४८ ॥
तस्मिन्देशे तथातङ्को[7] नैव किंचिद्भविष्यति ।

इति नी० आचारमाहात्म्यम् ।

---

१ तदेतत् सुहितं राज्ञां C, D. २ समुच्छिन्नं C. ३ नीलवाक्यं न क्रियते C, D. ४ Line 20 not in C, D. ५ तस्मात् C, D. ६ वचनं C, D. ७ आतङ्कम् C.

जनमेजय उवाच ।

कश्मीरकस्तु गोनन्दो बृहदश्वेन भाषितम् ॥ १०४९ ॥
श्रुत्वोवाच मुनिश्रेष्ठं बृहदश्वं नराधिप ।

गोनन्द उवाच ।

प्राधान्येन तु ये नागाः कश्मीरेषु कृतालयाः ॥ १०५० ॥
नामतस्तु समाचक्ष्व श्रोतुमिच्छामि तानहम् ।

बृहदश्व उवाच ।

नागानामधिपो नीलो वासुकिश्चापि तक्षकः ॥ १०५१ ॥
कम्बलाश्वतरौ नागौ कार्कोटकधनंजयौ ।
ऐलापुत्रो ह्यनन्तश्च नागौ नन्दोपनन्दकौ ॥ १०५२ ॥
कुलिकाश्वतसंख्यौ च [1]पालाशः [2]खेडिसो बडिः ।
हिलिहालः शंखपालो नागौ चन्दननन्दनौ ॥ १०५३ ॥
नागौ नीलमहानीलौ नागौ वातिकषंडिकौ ।
द्वौ पद्मौ द्वौ महापद्मौ द्वौ कालौ द्वौ च कच्छपौ ॥ १०५४ ॥
द्वौ समुद्रौ समुद्राणौ द्वौ गजौ द्वौ च तक्षकौ ।
हस्तिकर्णावुभौ नागौ द्वौ हस्ति[3]वामनावुभौ ॥ १०५५ ॥
[4]महेशौ द्वौ वराहौ द्वौ [5]कोपनादौ च पन्नगौ ।
पानीयश्चापनीकश्च कनकाख्यः कलिंककः ॥ १०५६ ॥
[6]खेडः शपालः खेरीशो लाहुरो [7]लेदिरस्तथा ।
[8]खेदश्च फरथाढश्च जयन्तश्च समस्तथा ॥ १०५७ ॥
सूदनौ द्वौ सुपार्श्वश्च [9]सुनासः पञ्चहस्तकः ।
[10]प्रद्युम्नश्चान्धकः शम्भुः स्वालो मूलेश्वरः घृषः ॥ १०५८ ॥
उघोलसाहुनीमध्यौ नागौ गन्छिलमिच्छिलौ ।
सुधादो मूषकादश्च पिशिताशो घदोदनः ॥ १०५९ ॥
नारायणो निरुद्धश्च वासुदेवो [11]जलान्धसः ।
पात्रश्च मानसश्चैव तथैवो[12]त्तरमानसः ॥ १०६० ॥

---

१ पालादः D. २ खेडितो D. ३ नामानौ D. ४ कुमारौ–D. ५ कोपनौ C. ६ खेदः C, D. ७ लोदिदः D. ८ खेडश्च C, D. ९ पिशितादो D. १० Lines 22–24 not in D. ११ जलन्धमः C. १२ पानस C.

अमानसः कपाली च नागः सङ्कर्षणस्तथा ।
शतधार[1]: खिलचारो रोहिण्याख्यो[2]ऽथ शक्तिकः ॥ १०६१ ॥
आखुफालौ फलाफ[3]श्च नागः कानसरस्तथा ।
सुश्रवो[4] देवपालश्च नागेन्द्रोऽथ बलाहकः ॥ १०६२ ॥
चन्द्रसूर्यावुभौ नागौ शुचिः शुक्रो विडूरथः ।
फेलडाः[5] सुकुमारश्च खिडीवो विजयो जयः ॥ १०६३ ॥
भङ्कचः क्रोहणो[6] वायुः शुक्रो वैश्रवणोपमः ।
मण्डकनासो गान्धारो नागः शूर्पारकिर्ध्वनिः ॥ १०६४ ॥
शमलो लोलुनो बभ्रुर्बिन्दुर्बिन्दु सरा[7] नतः ।
तित्तिरिर्हस्तिभद्रश्च नागो ग्रहपतिस्तथा ॥ १०६५ ॥
कदम्बश्चापदो वाली विभूतिः कालकुञ्जरः ।
भवश्चक्रधरः श्वभ्रो भवो देहारको गुडः[8] ॥ १०६६ ॥
अन्धः पङ्गुस्तथा कुष्ठी काणो वधिर वण्ठकौ ।
अनागपाद[9]ः कितवः सूकरः प्रसवोत्कटौ ॥ १०६७ ॥
सांधीय[10]ः शतपादश्च वोर्ग[11]: शतमुखो द्रुहः ।
अतिभद्रो[12] बहुभुग्निम्दुनादः शिरोजडः ॥ १०६८ ॥
कामरोक्षो[13] विशालाक्षः सुवर्ताक्षो[14] भयानकः ।
कुवेरो[15] धर्म लटको दैत्यराजः षडङ्गुलः ॥ १०६९ ॥
गन्धर्वो धृत्तराष्ट्रश्च कुसुमः कुहरः कुंड[16]: ।
मंदाक्ष[17]श्च वट्टूस[18]श्च कंटूसौ[19] देवदानवौ ॥ १०७० ॥
नक्षत्रो मषकः पीतो गौतमः सुशुभोः जिह्वः[20] ।
स्वर्गः शिशिरवासी च श्रीवासाः श्रीधरः खगः ॥ १०७१ ॥
लाङ्गली बलभद्र[21]श्च स्वरूपः पञ्चहस्तकः ।
कामरूपो दरीकर्णः सप्तशीर्षो बहूदरः ॥ १०७२ ॥
सुनेत्रो बहुनेत्रश्च हनुमानङ्गदो हरः ।
हंठकः[22] पाठरः पाथो[23] मल्लो विमलको मटः ॥ १०७३ ॥

---

१ सत्रदार D; शतचार C. २ हिरण्याख्यो C. ३ फलाह D. ४ सुभद्रो D. ५ फेलडम्ब. D. ६ फणो C, D. ७ नभ: D. ८ गुरु: D. ९ पाद C. १० मादीद: D. ११ योग C, D. १२ अतिरुद्रो D; अतिनिद्रो C. १३ कासाराक्षो D. १४ सुवृताक्षो D. १५ धीरो धर्मज्ञलटव: D. १६ कुहु: D. १७ महाक्षश्च D. १८ वट्टुपश्च D. १९ कुटुंमो C, D. २० रिह D. २१ वकभद्रश्च D. २२ हनुरः; हबकः C. २३ पायो D.

नागः शतमुखश्चैव चित्राश्वो दधिवाहनः ।
सुशीमः कालियः कालः पैटनः[1] खदरस्तथा ॥ १०७४ ॥
अत्रिश्च शवलश्चैव व्रणको लुलनस्तथा[2] ।
हेलियारो[3] हेमियारो[4] वरीलः केलको निमिः ॥ १०७५ ॥
चाटरो लेलिहानश्च पञ्चास्याः पिङ्गलोदरः[5] ।
कृतं त्रेता द्वापरश्च समः संवत्सरस्तथा ॥ १०७६ ॥
खल्वादो बहुरोमा च कापोतिः पुष्य साहपिः[6] ।
राष्ट्रेश्वरः शिनीरिश्च शतानन्देति कोपनः ॥ १०७७ ॥
आनन्दोऽथ जैवानन्द[7] स्त्रिशीर्षो जटिल स्तथा ।
गन्धसोमस्तथा गार्ग्यः इतितिर्मि निटिस्तथा ॥ १०७८ ॥
ऐरावतः सकौरव्यो माषादः कुमुदप्रभः ।
हवोमवः शठः शाण्योः शत्रुघ्नौ रामलक्ष्मणौ ॥ १०७९ ॥
महादेवः कामपालो गोशिराः सयुधिष्ठिरः ।
डाङ्कुवो विशाखश्च शर्मो[8] रवौ महोदरः ॥ १०८० ॥
मकरो मकराक्षश्च नकुलो बलवाञ्शिखी ।
चन्द्रपाटनकः[9] कारुः केबुको ब्राह्मणप्रियः ॥ १०८१ ॥
करवीरो जरासंन्धो निशाचरदिवाचरौ ।
उलिङ्गलिश्च[10] वत्सश्च[11] माथरो वदारो विटः ॥ १०८२ ॥
हुवरश्च[12] करवालश्च तपनोगा शिरस्तथा ।
कर्करः[13] करवाटश्च वरघोषः सुमङ्गलः ॥ १०८३ ॥
गुह्लकाः शम्वरः शामी पयो मोहो[14] निहाशनैः[15] ।
करहालः कुसूरात्रो धौम्यो नागोऽथ गालवः ॥ १०८४ ॥
उखोलश्च शिखिलश्च वह्निरूपो हिरण्मयः ।
सत्याकुलः[16] कुसूलश्च कृपणाः[17] कुट्टको हरिः ॥ १०८५ ॥
किमूधः[18] शलभश्चैव किंशुकः प्रियसारकः[19] ।
मालाकुलो ऽभ्रशिखरो वसिष्ठः सुत्रनामुखः ॥ १०८६ ॥

---

१ पाटनः खदिरस्त C, D. २ ललना D. ३ फेलियारो D. ४ फेमियामो D. ५ पिङ्गलोदकः C, D. ६ साह्वय D. ७ जयानन्द D. ८ समेरुः वा महोदरः D. ९ चर्म D. १० पातंडालिश्च D. ११ बन्धश्च, माठरो विठरो विटः D. १२ हूवरः C, D. १३ कवाट D. १४ माहा D. १५ गज D. १६ माद्याकुलकलूषश्च D. १७ कृपाणः कुट्टको D. १८ केशग्धः D. १९ मारकः D.

नागौ द्वौ ज्यौ महाराज्यौ सुभद्रा भद्रवालिनौ[1] ।
धीर[2]भद्राशनौ नागौ नागौ [3]सारसधुक्ककौ ॥ १०८७ ॥
र[4]क्ताकश्च तथा चक्रो गोशो [5]वंशनगस्तथा ।
विद्याधरश्च यक्षश्च विरसः सस्यवर्धनः ॥ १०८८ ॥
भद्राशो गजनेत्रश्च कणारः कुमुदस्तथा ।
आनकः कात[6]र्कः शम्बः शण्डू[7] [8]मर्को गिरिप्रियः ॥ १०८९ ॥
[9]उग्राभिधोऽभिन्युश्च [10]असुरश्चा मृताशनः ।
अजकर्णोऽथ गोना[11]सः सृगालः काबकाननः ॥ १०९० ॥
ब्राह्मणः क्षत्रियो वैश्यः शूद्रो दीप्तो विहङ्गमः ।
[12]शङ्कादः कमलादश्च मणि[13]नागठहेठकः ॥ १०९१ ॥
जयन्तः कूपनो विश्वा शाखामुख[14]सुवर्चलौ ।
गुहः [15]सुमाली माली च माल्यवानानृतः परः ॥ १०९२ ॥
क्षात्तो मस्स[16]नको भीष्मकाश्मीरौ मधुवालिशौ ।
भीमाक्षो भीमनादश्च नागौ हालुष[17]कालुषौ ॥ १०९३ ॥
महेन्द्र[18]सुधामानः शालीयो मालियस्तथा ।
सहस्रधारोद्युतिमान्विभूतिः कवडाम्बरौ ॥ १०९४ ॥
शवलो बहुरूपश्च भद्राश्व श्रोत्तरीयकः ।
मणिकण्ठः कलेलश्च [19]शूरो वालोऽथ नूपुरः ॥ १०९५ ॥
[20]कुशकुण्डौ तुल्यषण्डो अटः श्वभ्रो वितारणः ।
अरविन्दः सकल्हारो बिन्दुमान्[21]प्रसिता वटः ॥ १०९६ ॥
सागरौ द्वौ तथा गाङ्गौ वैतस्तौयामुनावुभौ ।
चित्रोपचित्रौ सुरभिर्भूतलाम्बरचारिणौ ॥ १०९७ ॥
उपचित्रः कङ्कतश्च नागौ नारदपर्वतौ ।
विश्वावसुः पारिजातो [22]वेल्लुल्लुलल्लोजलल्लुसः ॥ १०९८ ॥
नागश्च [23]स्वास्तिकस्वामी भूजिलश्चिकुरस्तथा ।
[24]अंकुष्टो द्रुहकष्ठश्च केशपिङ्गलधूसरौ ॥ १०९९ ॥

---

१ वालिशो D. २ भद्रा–D. ३ मानसपुक्कसौ D. ४ डक D. ५ वश्य D. ६ कानव D. ७ चपड C. ८ सर्क D. ९ भगायुधो C, D. १० अमृतश्च C. ११ गोलास C. १२ शंखादा C, D. १३ नागवहेरकाः C, D. १४ सुवर्चसो D. १५ कुमाली D. १६ सनको D. १७ लार्णवो D. १८ सुदामानः D. १९ कूलबारो D. २० कुरुकण्डो D. २१ अमिटो D. २२ रल्ललल्लो जलोल्लपः D. २३ माचि D. २४ मकुन्त्रो वहकेशश्च D.

लम्बकर्णो गण्डलश्च नागः श्रीमाण्डकस्तथा ।
आवर्तकश्चन्द्रसारो नागः कहसुरस्तथा ॥ १००० ॥
लम्बकोऽथ चतुर्वेद्रः पुष्करत्रितयं तथा ।
अस्फोटनागषट्कश्च श्येनो बाहिलकाधरौ ॥ ११०१ ॥
क्षीरकुम्भो निकुम्भश्च निकुम्भः समरप्रियः ।
प्रविधानो[3] विधानश्च वाण्डो गोभी[4]र्जरान्वितः ॥ ११०२ ॥
भोगी भासवतो रौद्रो रुद्रो भोजकदेहिलौ ।
रोहिणोऽथ भरद्वाजो दधिनकः प्रतर्दनः ॥ ११०३ ॥
नागौ जावरेवौ द्वौ शत्रुमित्रौ सकर्तनौ ।
पङ्कश्च किन्दमोरम्भो बहुवेगो बहूदरः ॥ ११०४ ॥
मत्स्यो भीतो बहूलश्च करडि विनताप्रियः ।
ताम्राकरोऽथरजतो वनमाली सभावकः ॥ ११०५ ॥
नागो ज्योतिषिको वैद्यो धौरसारजनार्दनः ।
न्यग्रोधो दुम्भरो ऽश्वत्थो वलिपुष्पो वलिप्रियः ॥ ११०६ ॥
अङ्गारकः शनैश्चारी नागः कुञ्जरको बुधः ।
कालिगृत्सः कुटिलको नागौ राहुबृहस्पती ॥ ११०७ ॥
चारकस्तस्करः केतुः सूतपौरो[11] गवावुभौ ।
अजकर्णो श्वकर्णश्च विद्युन्मामालोदरीमुखः ॥ ११०८ ॥
औरणो[12]ऽरोचनो हासी नर्तनो गायनस्तथा ।
कम्भाटश्चसुभाटश्च बहुपुत्रो[13] निशाचरः ॥ ११०९ ॥
मयूरः केकिल[14]भ्राता मलयो यवनप्रियः ।
कोष्ठपालो महीपालो गोपालः[15] पटल[16]स्तथा ॥ ११०० ॥
राजाधिराजो विनतः स्वर्गो विमलको मणिः ।
चक्रहस्तो गदाहस्तः शूली पाली[17] सुगस्तथा ॥ ११११ ॥
नागश्चित्रकरो वत्सो वत्सो वक्रपतिस्तथा ।
शीतार्तो[18] वनमाली च रावणो राक्षसाकृतिः ॥ १११२ ॥

---

१ कन्दसरस्तथा D. २ कम्बलोथ D. ३ गानौ D, C. ४ भोगी D. ५ देहलो D. ६ जानवरेभो D. ७ कर्दमो D. ८ छिन्नसौराभौ D. ९ भोग D. १० नेद्यो C; वाद्यो D. ११ पौरौ D. १२ पुरणो रुदनो D. १३ बहुपुत्रो C, D. १४ कोकिलः D. १५ गापाल C. १६ शुचिः D, C. १७ पाशीसंगं तथा C, D. १८ यव–C.

यज्वदाता तथा होता भोक्ता भोगपतिस्तथा ।
एते प्रधान्यतो राजन्नागेशाः कीर्तिता मया ॥ १११३ ॥
एषां चयः परीवारः पुत्रपौत्रादिकं च यत् ।
न तच्छक्यं मया राजन्वक्तुं वर्षशतैरपि ॥ १११४ ॥
सर्वेषामेव नागानां पुण्यानि भुवनान्युत ।
सर्वे वरप्रदा नागाः सर्वे नीलमनुव्रताः ॥ १११५ ॥
सर्वेतिदयिता राजन्वासुकेः सुमहात्मनः ।

इति श्री नीलमते काश्मीरिकमुख्यनागवर्णनम् ।

बृहदश्व उवाच ।

दिक्पालानथ ते वक्ष्ये कश्मीरेषु[2] निबोध तान् ॥ १११६ ॥
पूर्वस्यां दिशि राजेन्द्र नागो बिन्दुसरो[3] मतः ।
दक्षिणेन तथा नागो नाम्ना श्रीमाडकस्तथा ॥ १११७ ॥
उत्तरेण तथा राजन् नाम्ना[4] चोत्तरमानसः ।
[6]पश्चिमेन तु राजेन्द्र नाम्नैलापत्र उच्यते ॥ १११८ ॥
पंच नागसहस्राणि प्रयुतान्यर्बुदानि च ।
तार्क्ष्यजं च भयं त्यक्त्वा वसन्तीह गतव्यथाः ॥ १११९ ॥
ये च प्रोक्ता मया नागास्तेषां मध्यात्षडंगुलः ।
एको विभासितो राज्ञा नीलेनामिततेजसा ॥ ११२० ॥
स्थानं षडंगुलं राजन् महापद्मस्य धीमतः ।
तृतीयस्य तु यद्दत्तं तत्र जातो जलाशयः ॥ ११२१ ॥
योजनायामविस्तारः समुद्र इव चापरः ।
छद्मनापहृतं यच्च महापद्मेन पार्थिव ॥ ११२२ ॥
नीलस्यानुमते पूर्वं विश्वगश्वान्नराधिप । (?)

इति श्री नी० दिक्पालनागवर्णनं [8]षडंगुलनिवासवर्णनं च ॥

गोनन्द उवाच ।

षडंगुलः कथं राज्ञा नीलेनास्माद्विवासितः ॥ ११२३ ॥

---

१ Line 8 not in C, D. २ कश्मीरायां C, D. ३ रसाः स्मृताः D. ४ स्मृताः C, D. ५ प्रोक्ताः C, D. ६ Line 14 not in C, D. ७ नागः D. ८ नागायतन कीर्तनम् C, D.

कथं च विष्वगश्वस्य स्थानं जातो जलाशयः ।
कथं च छद्मना नीतं महापद्मेन पार्थिवात् ॥ ११२४ ॥
एतत्सर्वं समाचक्ष्व कुशलो ह्यसि धार्मिकः ।

बृहदश्व उवाच ॥

पूर्वमेव सती देशे महापद्मं भुजंगमम् ॥ ११२५ ॥
विदित्वैव कृतं स्थानं वैनतेयो ह्यवादृतः ।
तस्य पुत्रांस्तथा सर्वान् आश्रितोपाश्रितान् खगैः ॥ ११२६ ॥
आक्रम्य भक्षयामास शतशोऽथ सहस्रशः ।
स्वजने भक्ष्यमाने च महापद्मो भुजङ्गमः ॥ ११२७ ॥
आजगाम महाभागं नीलं शरणमञ्जसा ।
स्थानं च प्रार्थयामास कश्मीरेषु जनेश्वरः ॥ ११२८ ॥
तमुवाच तदा नीलो महात्मानं भुजङ्गमम् ।

इति श्री नी० महापद्मप्रार्थना ॥

नागा भुजगशार्दूल सर्वेऽत्र विहितालयाः ॥ ११२९ ॥
नास्ति स्थानं तु वससि यत्र नागेन्द्रसत्तमः ।
न तं देशं प्रपश्यामि सूक्ष्ममप्यमरप्रभ ॥ १३० ॥
नागेनाधिष्ठितं यत्तु स्थानं स्यादिह मानद ।
पदे पदेऽधिष्ठितं यत्सर्वमेव भुजंगम ॥ ११३१ ॥
परिवारेण बहुना तथा त्वं परिवारितः ।
त्वद्योग्यं नैव पश्यामि स्थानं किञ्चित्कथंचन ॥ ११३२ ॥
किन्त्वस्ति साम्प्रतं शून्यं स्थानं शाडंगुलं शुभम् ।
मयाभिवासितो नागस्तस्मा देशाच्छडंगुलः ॥ ११३३ ॥
मनुष्याणां सा दारान् च हरत्यहरहः पुरा ।
इति निर्वास्य दत्तं च स्थानं तस्य ततो मया ॥ ११३४ ॥

---

१ Line 2 not in C. २ पार्थिव . ३ खगा: D. ४ Line 02 not in C, D. ५ इह कृतालया: C, D. ६ स्थानं........यत् not in C, D. ७ Line 20 not in C, D. ८ निर्वासितो C, D. ९ दाराधि C, D. १० इतो D.

उशीरके गिरिश्रेष्ठ दार्वेषु भुजगोत्तम ।
[१]महाहिस्थानपालोऽसौ युक्त्या तत्र निवेशितः ॥ ११३५ ॥
[२]गृहीतश्चानुरागेण जनः कश्मीरको मया ।
षडंगुलस्य नागेन्द्र समे पथि निवेशितः ॥ ११३६ ॥
पूज्यमानो जनैस्तत्र सुखमास्ते षडंगुलः ।
महाकथाश्चभयं [३]दत्तं तत्रास्य हरिणा स्वयम् ॥ ११३७ ॥
स्थाने षाडंगले रम्ये [४]विष्वगश्वस्य भूपते ।
यदेतन्नगरं रम्यं नाम्ना चन्द्रपुरं पुरम् ॥ ११३८ ॥
[५]अत्र ते दद्मि वसतिं कुरु तत्र जलाशयम् ।
यावत्पुरपरीमाणं योजनायामविस्तरम् ॥ ११३९ ॥
स्थाने षाडंगुले रम्ये दुर्वासा मुनिसत्तमः ।
उन्मत्तवेषप्रच्छन्नो नात्मवान् संप्रतिश्रयम् ॥ ११४० ॥
शप्तं तेन सरोषेण भवतीदं जलाशयः ।
नचापिविदितं नापि नाग मुनिवाक्यं तु कस्यचित् ॥ ११४१ ॥
मयैव केवलं ज्ञातं तस्यैवानुग्रहान्मुनेः ।
तस्मात्त्वं वसतिं तत्र कुरु पन्नग मा चिरम् ॥ ११४२ ॥
किन्त्वभ्यर्थय भूपालं विश्वगश्वं नराधिपम्[८] ।
छद्मना याचितं तस्य तथा कार्यं महीपतेः ॥ ११४३ ॥
स छद्मना याच्यमानो लो[६]भाद्धीन प्रदास्यति ।
[७]अवश्यकरणीयेऽर्थे पार्थिवः स्याद्विमानितः ॥ ११४४ ॥

इति श्री नी० महापद्मप्रबोधना ॥

बृहदश्व उवाच ।

एव मुक्तो तु नीलेन महापद्मो भुजंगमः ।
[illegible] ययौ [illegible] परम् ॥ ११४५ ॥
[illegible] याचितं तथा यथा [illegible] तथा ॥ ११४६ ॥

---

१ मयापि C, D. २ Lines 3, 4 not in C, D. ३ दत्वा D. ४ विष्वक्.........वस्तरं not in D. ५ Lines 9–10 not in C. ६ येन C. ७ Line 21 not in C, D. ८ नराभिपम् C, D. ९ दृष्ट्वा च C, D.

ब्राह्मण उवाच ।

राजन् चन्द्रपुरे श्वभ्रे दीयतां मे प्रतिश्रयः ।
पर्य्याप्तं यत् कुटुम्बस्य महता मे दयापर ॥ ११४७ ॥

विष्वगश्व उवाच ।

ददानि तेऽहं विप्रेन्द्र स्थानं चन्द्रपुरे शुभे ।
गृहाण यावत् पर्याप्तं सकुटुम्बस्य हे द्विज ॥ ११४८ ॥

बृहदश्व उवाच ।

स्वस्तिवाचं विधायाथ गृहीत्वा निर्मलं जलम् ।
प्रतिग्रहस्य राजेन्द्र महापद्मो भुजंगमः ॥ ११४९ ॥
उवाच मन्त्रिणां मध्ये नागरूपी नराधिपम् ।
हस्त्यश्वरथसंयुक्तः स्वजनैः परिवारितः ॥ ११५० ॥
निर्याहि नगरादस्मात्सधनद्रव्यसंचयः ।
सकुटुम्बस्य पर्याप्तं नगरं मे नराधिप ॥ ११५१ ॥
पीडया तु न वत्स्यामि त्वया दत्ते पुरोत्तमे ।
दुर्वाससा पुरा शप्तं नगरं ते नराधिप ॥ ११५२ ॥
जलाशयः सुविस्तीर्णो भाविता शीघ्र मेव तु ।

इति श्री नी० महापद्मकृतविष्वगश्वछलनावर्णनम् ।

बृहदश्व उवाच ।

तथा स राजा धर्मात्मा सपौरहयकुंजरः ॥ ११५३ ॥
सार्धिमंत्रिचयो गत्वा स्वपुराद्योजनत्रयम् ।
पश्चिमेन तदा चक्रे नगरं सुमनोहरम् ॥ ११५४ ॥
विष्वगश्वपुरे नाम यदेतद्भुवि विश्रुतम् ।
तत्रोवास सुखी राजा ब्राह्मणान् परिपूजयन् ॥ ११५५ ॥
नगरं प्लावयामास महापद्मो भुजंगमः ।
तत्रास्ते सपरीवारः सुखी भुजगसत्तमः ॥ ११५६ ॥

---

१ धर्मपुरे D. २ शुभं D. ३ प्रतिगृह्य जलं गृह्य स्वस्ति वाच्य भुजंगमः in Place of Lines 8, 9 in C, D. ४ Lines 14, 15 not in C, D. ५ Line 57 not in C, D. ६ सधनद्रव्यसंचयः D. ७ सार्धं C. ८ मन्त्रिमयं D. ९ द्वयं C, D.

महापद्मसरस्तच्च योजनायामविस्तरम्[1] ।
सुपुण्यं रमणीयं च सतां हृदयनन्दनम् ॥ ११५७ ॥
महापद्मप्रभावेन दुष्टग्राहविवर्जितम् ।
तत्रास्ते स सुखी नागः कुटुम्बपरिवारितः ॥ ११५८ ॥
महापद्मसरस्यास्ते कथितः संभवो मया ।
किमन्यत्तव राजेन्द्र कथयामि वदस्व तत ॥ ११५९ ॥
[illegible]
कश्मीरेषु च देशेषु दर्शनं संप्रकीर्तय ॥ ११६० ॥

बृहदश्व उवाच ।

विनायकस्तु गांगेयो विश्रुतो वर्धनद्रुमः ।
यं दृष्ट्वा सर्वकल्याणीं सिद्धिमाप्नोति मानवः ॥ ११६१ ॥
तथाविधं काम्यवरं तस्य दक्षिणपश्चिमे ।
देशे तु क्रोशमात्रेण दृष्ट्वा कार्याणि साधयेत् ॥ ११६२ ॥
भूर्जस्वामी हिडिम्बेषु लोभारः श्रीविनायकः ।
उत्तंकेषु गुहास्वामी[2] भीमेषु सौमुखस्तथा ॥ ११६३ ॥
भद्रेश्वरो महास्यश्च महाशनगवेषणौ[3] ।
पौलस्त्यो गिरिवासी च जयेश्वर महेश्वरौ ॥ ११६४ ॥
एकैकमेव दृष्ट्वा तु गणेशं सुसमाहितः ।
कार्यसिद्धिमवाप्नोति पुण्यफलमुपाश्नुते ॥ ११६५ ॥
शंच्याः[4] समीपे पौलस्त्यं दृष्ट्वा स्कन्दं नराधिप ।
पात्रकुंडे[5] नरः स्नात्वा कौमारं लोकमाप्नुयात् ॥ ११६६ ॥
मालये[6] वने गौतमेशं विश्वामित्रेश्वरं तथा ।
सौनासिकं वसिष्ठेशं माखरेशं[7] सुरेश्वरम् ॥ ११६७ ॥
स्कन्धेश्वरं बिशाखेशं पौलस्त्यमपरं तथा ।
दृष्ट्वा कुमारमेकैकं फलं गोदानजं लभेत्[8] ॥ ११६८ ॥

---

१ विस्तृतं C. २ गुहावासी C, D. ३ भवेषणौ C, D. ४ शम्या D, C. ५ पात्रकुण्डं ततः D. ६ मालीवनं गौरमीशं C, D. ७ माखरशं C, D. ८ भवेत् C, D.

पौलस्त्यनिर्मितं शक्रं[1] भरद्वाजकृतं तथा ।
काश्यपं कण्वमागस्त्यं वासिष्ठं[2] च शतक्रतुम् ॥ ११६९ ॥
दृष्ट्वा स्वर्गमवाप्नोति गोसहस्रफलं लभेत् ।
अग्नेरङ्गिरसौ दृष्ट्वा प्रतिमामाप्नुयाद् ध्रुवम् ॥ ११७० ॥
तैजसे[3] तु नरः स्नात्वा दृष्ट्वा प्रेताधिपं यमम् ।
स्वर्गलोकमवाप्नोति तिलधेनुफलं लभेत् ॥ ११७१ ॥
स्नात्वा तु पुष्करे तीर्थे दृष्ट्वा सूर्यसुतं तथा ।
सर्वपापविनिर्मुक्तो स्वर्गलोके महीयते ॥ ११७२ ॥
प्रेताधिपं वासिष्ठेशं उत्तंकेशं तथा यमम् ।
दृष्ट्वैकैकमथैतेभ्यो मुच्यते सर्वकिल्बिषैः ॥ ११७३ ॥
ताराराज्ञ्यां विशेषेण दृष्टाह्य[4]........... ।
दृष्ट्वा तमर्चितं देवं विरूपाक्ष[5]मिति श्रुतम् ॥ ११७४ ॥
नाप्नोति सर्वकालेषु भयं राक्षससम्भवम् ।
दृष्ट्वा तु वारुणं देवं......बलिना कृतम् ॥ ११७५ ॥
सर्वपापविनिर्मुक्तो वारुणं लोकमश्नुते ।
मानसस्योत्तरे कूले महापद्म जलाशये ॥ ११७६ ॥
.........भवनं पौलस्त्येन विनिर्मितम् ।
गोदानफलमाप्नोति व्याधिभिश्च विमुच्यते ॥ ११७७ ॥
दृष्ट्वा धनेश्वरं देवं वितस्ता[6]तत्समीपतः ।
कपटेश्वरपार्श्वे[7] च दृष्ट्वाऽगस्त्येन निर्मितम् ॥ ११७८ ॥
सीतारिः[8] गौतमस्वामी सौमुखं सुरभीकृतम् ।
दृष्ट्वैकैकमथैतेभ्यो धनवानपि जायते ॥ ११७९ ॥
दृष्ट्वा शशांकं राज्ञा तु शचीन्द्रेण[9] विनिर्मितम् ।
चन्द्रलोकमवाप्नोति नरो नास्त्यत्र संशयः ॥ ११८० ॥
मणिभद्रं तथा दृष्ट्वा धनवानपि जायते ।
कामदेव[10]मगस्त्येन पर्वतोपरि निर्मितम् ॥ ११८१ ॥
दृष्ट्वा सुखमवाप्नोति रूपवानपि जायते ।
पुलस्त्यनिर्मिता देवी भुवि भीडेति विश्रुता ॥ ११८२ ॥

---

१ शुक्रं C, D. २ वशिष्ठं D. ३ तैजसं तु त: D. ४ दृष्ट्वा C, D. ५ विरू.........वारुणं देवं not in C, D. ६ वितस्ताख्य D. ७ पार्श्वं C, D. ८ सोदरं . ९ सुचन्द्रेण C, D. १० Lines 26, 27 C, not in C, D.

[1]दृष्ट्वा तां मणिवन्द्यां च फलं प्राप्य मनीषितम् ।
सर्वपापविनिर्मुक्तो विद्यामाप्नोत्यनुत्तमाम् ॥ ११८३ ॥
दृष्ट्वा विशोकां काश्मीर्यां केशवेनोपबृंहिताम् ।
प्रतिष्ठितां केशवेन विष्णुलोके महीयते ॥ ११८४ ॥
भीमादेवीं तथा दृष्ट्वा श्रियमाप्नोत्यनुत्तमाम् ।
तथा कापिञ्जलीं देवीं तथा देवीं सुरेश्वरीम् ॥ ११८५ ॥
भद्रेश्वरीं गौतमेशीं देवीं कालशिलामपि ।
तथोद्योगश्रियं नाम्ना[2] गवाक्षीं चण्डिकामपि ॥ ११८६ ॥
दुर्गां देवीं सविजयां शाकुनीं[4] ब्रह्मचारिणीम् ।
[5]चन्द्रेश्वरीं तथा दृष्ट्वा मनोरथमवाप्नुयात् ॥ ११८७ ॥
चक्रस्वामीसमीपे च दृष्ट्वा देवीं हराङ्कगाम् ।
सर्वपापविनिर्मुक्तो रुद्रलोके महीयते ॥ ११८८ ॥
कार्तवीर्यार्जुनस्वामी [6]नामांकं च दिवाकरम् ।
कश्यपस्वामिमार्तण्ड-विष्वगश्वकृतं रविम् ॥ ११८९ ॥
[7]सुचन्द्रेशं सुचक्रेशं [8]सुरभिस्वामिनं रविम् ।
दृष्ट्वैकैकमथैतेभ्यो हय[9]दानफलं लभेत् ॥ ११९० ॥
[10]ब्रह्माणं वरदं दृष्ट्वा शैलरूपधरं स्वयम् ।
विष्णुस्वामि-हरस्वामि-कश्यपस्वामिनस्तथा ॥ ११९१ ॥
[11]दृष्ट्वैतान् स्वर्गमाप्नोति भूमिपालपितामहान् ।
चक्रस्वामिसमीपस्थं [12]हरिं दृष्ट्वा सुदर्शनम् ॥ ११९२ ॥
[13]सायंभुवं वह्निकृतं तथा वै पिंगलेश्वरम् ।
बिन्दुनादेश्वरं देवं देवं भद्रेश्वरं तथा ॥ ११९३ ॥
चन्द्रेश्वरं सज्येष्ठेशं बालखिल्येश्वरं हरिम् ।
केशवेशं स्वमेशं च धौम्येशं वरुणेश्वरम् ॥ ११९४ ॥
चक्रेश्वरं सचन्द्रेशं कश्यपेशं विलोहितम् ।
कामेशं सवसिष्ठेशं भूतेशं सगणेश्वरम् ॥ ११९५ ॥
सूर्येश्वरं महाराज भसेशं विमलेश्वरम् ।
दृष्ट्वैकैकमथैतेभ्यो मुच्यते सर्वकिल्बिषैः ॥ ११९६ ॥

---

१ Line 1 not in C, D. २ नाम D. ३ गौरीम् C, D. ४ शाकुनिम् C, D. ५ चक्रेश्वरीम् B. ६ दृष्ट्वा तं च C, D. ७ सचन्द्रेशं D. ८ स्वरभि A, B. ९ मेध्य D. १० ब्राह्मणं A, B. ११ Line 19 not in D. १२ हरं D. १३ स्वयंभुवं D.

हिमाचलेशं शंखेशं देवं वै चट्ठलेश्वरम् ।
महानदेश्वरं शंभुं वरदं कश्यपेश्वरम् ॥ ११९७ ॥
राजेश्वरं नृसिंहेशं भवेशं धनदेश्वरम् ।
[1]दृष्ट्वैव सर्वपापेभ्यो मुच्यते नात्र संशयः ॥ ११९८ ॥
सदा सन्निहितो राजन् देवो भूतेश्वरो [2]हरः ।
मुच्यते किल्विषैः सर्वैस्तत्र दृष्ट्वैव नन्दिनम् ॥ ११९९ ॥
[3]नन्दीश्वरप्रसादेन महाभूतेश्वरो हरः ।
सान्निध्यं कुरुते तत्र लोकानां हित[4]काम्यया ॥ ११९० ॥
सदा सन्निहितस्तत्र नन्दीभक्त्या हरस्य तु ।
भक्त्या नन्दिनमालोक्य समाप्नोति मनीषितम् ॥ १२०१ ॥
[5]तयोर्मध्ये गतं दृष्ट्वा संप्राप्तं कपटेश्वरम् ।
गो-सहस्रमवाप्नोति संपूज्याभीप्सितां गतिम् ॥ १२०२ ॥

इति श्रीनीलमते देवायतनकीर्तनम् ॥

गोनन्द उवाच

कथमाराधितो देवो नन्दिना वदतां वर ।
नित्यं सन्निहितः शं[6]भुर्येन भूतेश्वरः स्थितः (?) ॥ १२०३ ॥

बृहदश्व उवाच

शृणु राजन् कथां दिव्यां सर्वकल्मषनाशिनीम् ।
नन्दिनं प्रतिभूपाल यथा वृत्तां मनोरमाम् ॥ १२०४ ॥
शिलादो नाम विप्रोऽभूत् पुरा पुत्रविवर्जितः ।
तेन वर्षशतं भुक्त्वा शिलाचूर्णं नराधिप ॥ १२०५ ॥
नन्दिपर्वतमासाद्य महादेवप्रसादतः ।
पुत्रार्थिनस्तदा तस्य देवदेवोऽनुकम्पया ॥ १२०६ ॥
पुत्रत्वे नन्दिनं प्रादात् सुगणेशं महाबलम् ।
दीयमानस्तु पुत्रत्वे नन्दी प्रोवाच शंकरम् ॥ १२०७ ॥
अनुग्रहाद्द्विजस्यास्य पुत्रोऽहंभविता विभो ।
कित्वयोनिभवो देव भवेयं तस्य पुत्रकः ॥ १२०८ ॥
चिरं च नच वत्स्येऽहं मानुषे त्वद्विनाकृतः ।
तमुवाच हरो देवः प्रहसन्ननुकम्पया ॥ १२०९ ॥

---

१ Line 4 not in C, D. २ हरिः C, D. ३ नन्दीश्वरं प्रसर्ज हि सदा भूतेश्वरस्तथा C, D. ४ राजशार्दूल C, D. ५ तोयमध्ये C, D. ६ देवो C, D.

उमाविवाहे शप्तोऽसि भृगुना त्वं गुणोत्तमः ।
अपूजितेन मानुष्यं[1] तस्मात्ते भविता ध्रुवम् ॥ १२१० ॥
तेन चैव शरीरेण मत्समीपमुपेष्यसि ।
यतः[2] प्रभृति मानुष्ये वत्स्यसित्वं गुणोत्तमः ॥ १२११ ॥
वत्स्यासि मत्समीपे च प्राकाम्यन यथासुखम् ।
वत्स्यसि[3] त्वं च मानुष्ये भृगुशापबलात्तदा[4] ॥ १२१२ ॥
तत्रापि तेऽहं वत्स्यामि प्राकाम्येन गुणोत्तम ।
एवं भूतेश्वरो[5] नन्दी नित्यं वसति पार्थिव ॥ १२१३ ॥
प्राकाम्येन हरो देवस्तथा त्वदनुकम्पया ।
इति[6] श्री नील० नन्दिगणशापवर्णनम् ॥

बृहदश्व उवाच ।

एवं[7] महेश्वरेणोक्तः स्वान्तपूर्वं वचस्तदा ॥ १२१४ ॥
गुणोत्तमो मनुष्यत्वं स्वीचक्रे भाविताशयः ।

गोनन्द उवाच ।

कथं जातः शिलादस्य नन्दी पुत्रत्वमागतः ॥ १२१५ ॥
कथं च स्वशरीरेण गाणपत्यमवाप्तवान् ।
अत्याश्चर्यमिदं[8] नाम यदनेनैव वर्त्मना ॥ १२१६ ॥
गाणपत्यमवाप्तोऽसौ विस्तरेण वदस्व मे ।

बृहदश्व उवाच ।

अयोनिजः शिलादेन विप्रेण[9] सुमहात्मना ॥ १२१७ ॥
यथाप्तोऽसौ[10] गणः पुत्रः स्तन्मे निगदतः शृणु ।
अयोनिजः शिलादेन शिलां चूर्णयता तदा ॥ १२१८ ॥
संप्राप्तस्तु शिलामध्यात्पुत्रो नन्दी शशिप्रभः ।
तं प्राप्य तनयं विप्रः शिलदे हर्षमागतः ॥ १२१९ ॥
ददौ[11] दानं यथाशक्ति विप्रगाथकनर्तकान् ।
संतर्पयामास तदा शरीरेण ममौ मुदा ॥ १२२० ॥

---

१ मानुष्ये तेनासि C, D. २ ततः C, D. ३ वत्स्यमे किं च C, D. ४ भृगुणा प्रबलात्कृतः D. ५ गणेश्वरः C, D. ६ Line 10 not in C, D. ७ Lines 12, 13 not in C, D. ८ Lines 17, 18 not in C, D. ९ शिलां चूर्णयता तदा C, D. १० Lines 21, 22 not in C, D. ११ Lines 25, 26 not in C, D.

संस्कारांश्चापि निखिलान् विदधेऽसौ यथाविधि ।
[1]आमन्त्र्य ब्राह्मणश्रेष्ठान् संमानितान् यथायथम् ॥ १२२१ ॥
क्रियमाणेषु पुत्रस्य संस्कारेषु तदा द्विजः ।
अल्पायुषं स शुश्राव ब्राह्मणेभ्यस्तदा सुतम् ॥ १२२२ ॥
श्रुत्वाऽवोचत् स धर्मात्मा शिलादः पुत्रवत्सलः ।
[2]ब्रूत मे सदुपायं तं येनासौ जीवितो भवेत् ॥ १२२३ ॥
इति संप्रार्थिताः तेन ब्राह्मणास्तं पुरस्थितम् ।
प्राञ्जलिं प्राब्रुवन् सर्वे शृणु वाक्यं तपोनिधे ॥ १२२४ ॥
सर्वस्य साधनैः सिद्धैर्मुनिभिः सर्वदर्शिभिः ।
विनायुरिति संचिन्त्य सुखी भव गतज्वरः ॥ १२२५ ॥
प्रारब्धं यादृशं यस्य सूचितं तस्य पूर्तये ।
जीवनं जीवितं पूर्तौ तस्य किं नर्म साधनम् ॥ १२२६ ॥
न मन्त्रं नौषधं तद्धि लोकेऽस्मिन् किल दृश्यते ।
श्रूयते वापि येनाऽस्य नष्टमायुः पुनर्भवेत् ॥ १२२७ ॥
इति विप्रमुखोद्गीतां निशम्य गिरमुद्धताम् ।
शिलादोऽतीव खिन्नोऽसौ रुरोद भृशदुःखितः ॥ १२२८ ॥
तं रुदन्तं तदा नन्दी वारयामास धर्मवित् ।
[3]मामा रोदिहि ताताऽद्य तवाऽहं प्रियकाम्यया ॥ १२२९ ॥
आराध्य शंकरं देवं दीर्घमाप्स्यामि जीवितम् ।
एवमुक्त्वा स पितरं प्राप्तानुरास्ततः स्वयम् ॥ १२३० ॥
शुभं हिमवतः शृंगं हरमुकुटमित्यधः[4] ।
[5]यदस्ति लोके विख्यातं गंगाप्रभव मुत्तमम् ॥ १२३१ ॥
जगाम सहसा [6]तत्र तपसि कृत निश्चयः ।
[7]यस्य शृंगस्य पूर्वार्द्धे सरोऽस्ति विमलोदकम् ॥ १२३२ ॥
कालोदकमिति ख्यातं सर्वकिल्विषनाशनम् ।
तस्मिन्नन्दी शिलां गुर्वीं गृहीत्वा मूर्ध्न्यतन्द्रितः ॥ १२३३ ॥

---

१ Line 2 not in C, D. २ Lines 6–16 not in C, D. ३ मात्वं रोदसि C, D. ४ माख्यातं C, D. ५ Line 22 not in C, D. ६ नन्दी C, D. ७ तस्य C, D.

आराधयामास हरं रुद्रजाप[1] रतो जले ।
[2]तस्य वर्षशतं रुद्रं जपतः सलिले गतम् ॥ १२३४ ॥
ततो वर्षशते पूर्णे देवी देवमभाषत ।
पुत्रोऽसौ भगवन् नन्दी कालोदे तप्यते तपः ।
वरदानेन तं देवं योजयस्वाशु मा चिरम् ॥ १२३५ ॥
एवमुक्तस्तदा देव्या वाराणस्यां नराधिप ।
देव्या सह ततो देवो मार्गेण क्षितिगामिना ॥ १२३६ ॥
[3]आययौ वृषभारूढोऽ[4]लक्षितं परमादृतः ।
स प्रयागमतिक्रम्य तथायोध्यां महापुरीम् ॥ १२३७ ॥
पुण्यं च नैमिषारण्यं गंगाद्वारमतः परम् ।
स्थानेश्वरात्कुरुक्षेत्रं [5]ततो विष्णुपदं शुभम् ॥ १२३८ ॥
शतद्रुं च विपाशां च पुण्यतोयामिरावतीम् ।
देविका चन्द्रभागां च तथा विष्णुपदं सरः ॥ १२३९ ॥
विशोकां विजयेशं च वितस्तां सिन्धुसंगमम् ।
एतान् सर्वानतिक्रम्य प्रययौ भरतं गिरिम् ॥ १२४० ॥
[6]तस्य मूलमथासाद्य देव्यै वचनमब्रवीत् ।
इहैव तिष्ठ तावत्त्वं महं यास्याम्यतः परम् ॥ १२४१ ॥
वृषेण सहितः देवि पर्वतेऽस्मिन् हि यः पथा ।
करोत्यारोहणं तस्य महत्पुण्यफलं स्मृतम् ॥ १२४२ ॥
पथा त्वं न समर्थाऽसि सुकुमाराऽसि देवि यत् ॥ १२४३ ॥
आरोढुं तेन यास्येऽहमेक एवाद्य सत्वरः ।
तस्मादेशात्प्रवृत्तस्तु गन्तुं देववरः पथा ॥ १२४४ ॥
पथीश्वराख्यस्तत्रेष्टो देवस्यायतनोऽभवत् ।
आरुरोह [8]यदा शैलं पथा [9]देवो महेश्वरः ॥ १२४५ ॥
तदा वृद्धिमगाच्छैलो महतीं भूरिदक्षिणः ।
वर्धमानं तु तं ज्ञात्वा क्रान्त्वा क्रुद्धो महेश्वरः ॥ १२४६ ॥

---

१ जाप्य B. २ न चापि किंचित्तस्याहो अभिज्ञानमुदीभवेत् । निरन्तरमसौ तत्र दृढभावनया स्थितः । मुनीनां तपतां तत्र शोकोथोद्भवत्किज occur in B, after the line 2. ३ प्रदेशे C, D. ४ नचादृश्यत केनचित् C, D. ५ तथा C, D. ६ देव्याः C, D. ७ याम्यहं B. ८ यथा C, D. ९ यदा C, D.

रूपं कृत्वा महद्घोरं तदा मूर्धन्यताडयत् ।
तदा प्रभृति शैलोऽसौ मुण्डपृष्ठः प्रकीर्तितः ॥ १२४७ ॥
मुण्डपृष्ठं शरीरेण स्पृष्ट्वा सर्वेण मानवः ।
अशुभं कीर्तयित्वा च तस्मात्पापात्प्रमुच्यते ॥ १२४८ ॥
देवेन ताडितः शैलो रूपं मानुषमास्थितः ।
प्राञ्जलिर्देवदेवेशं उवाच विनयान्वितः ॥ १२४९ ॥
[3]भगवन्नपराधं मे क्षमस्व वृषभध्वज ।
महात्मानो न गृह्णन्ति प्रायशः कृपणान् जडान् ॥ १२५० ॥
सोऽहं कृपणभूतोऽस्मि जडश्च सुतरां विभो ।
अनुगृह्णीष्व मां देव प्रसीद करुणानिधे ॥ १२५१ ॥
इत्यार्तवचसा तेन देवदेवः प्रभाषितः ।
[4]प्रसन्नीभूय देवेशः शैलमाह कृपान्वितः १२५२ ॥
मम पादप्रहारेण निर्गतं यज्जलं तव ।
कृपाणीतीर्थमित्येतद्भुवि [5]ख्यास्यति पर्वत ॥ १२५३ ॥
मुण्डपृष्ठं गिरिं कृत्वा सौम्यं रूपमथास्थितः ।
अप्सरोभिर्युतो यत्र तीर्थमप्सरसां हि[6] तत् ॥ १२५४ ॥
ततो ब्रह्मसरो नाम दृष्ट्वा तीर्थं मनोहरम् ।
हंसरूपधरः शैलं पाटयामास सत्वरः ॥ १२५५ ॥
हंसरूपेण यच्छैले कृतं रन्ध्रं महात्मना ।
हंसद्वार मिति प्रोक्तं सर्वकिल्विषनाशनम् ॥ १२५६ ॥
दृष्ट्वा तीर्थौ महादेवस्तथा [7]वार्तिकपिण्डकौ ।
कपिलां तीर्थमासाद्य स ददर्श पितामहम् ॥ १२५७ ॥
देवैर्वृतं महाभागं यजन्तं ऋषिभिः [8]सदा ।
हंसरूपधरं दृष्ट्वा ब्रह्मा देवं महेश्वरम् ॥ १२५८ ॥
जानुभ्यां अवनिं गत्वा ववन्दे परमेश्वरं ।
दृष्ट्वा च प्रणतं देवं ब्रह्माणं जगतः पतिम् ॥ १२५९ ॥
प्रणम्य शक्रस्तुष्टाव [9]यथा तच्छृणु भूपते ।

शक्र उवाच ।

नमस्ते देवदेवेश जगत्कारण कारण ॥ १२६० ॥

---

१ पदा C. २ मुण्डपृष्ठं प्रकीर्तितम् C, D. ३ Lines 7–11 not in C, D. ४ ततः प्रसन्नो C, D. ५ यास्यति C, D. ६ हितं D. ७ वार्तिक C, . ८ तदा D. ९ यत्तच्छृणु महीपते C, D.

त्रैलोक्यनाथ सर्वज्ञ सर्वेश्वर नमोस्तुते ।
त्वत्तोऽन्यं नैव पश्यामि जगतोऽस्यहि[1] कारणम् ॥ १२६१ ॥
त्वया सर्वमिदं व्याप्तं त्रैलोक्यं सचराचरम् ।
स्रष्टा त्वमस्य सर्वस्य संहर्ता पालकस्तथा ॥ १२६२ ॥
यदुन्मीलयसि नेत्रे त्रैलोक्यस्योद्भवस्तदा ।
भवतीह जगन्नाथ यदा स्वपिसि वै तदा ॥ १२६३ ॥
तदेतदखिलं देव त्रैलोक्यं संप्रणश्यति ।
भूमिर्धृता[2] धारयते त्वयेदं स चराचरम् ॥ १२६४ ॥
शब्दयोनिस्तथाकाशं[3] जगद्धारयते प्रभो ।
वीर्येण ते महाभाग त्वं च प्रोक्तस्तथाऽपरः ॥ १२६५ ॥
त्वं बुद्धिस्त्वं तथैवात्मा सर्वस्यास्य प्रकीर्तितः ।
अव्यक्तः पुरुषश्चैव रजःसत्वं तमस्तथा ॥ १२६६ ॥
इन्द्रियाणीन्द्रियार्थाश्च भूततन्मात्र संगकः ।
ज्ञाता ज्ञेयं तथा क्षेत्रं क्षेत्रज्ञः परमेश्वरः ॥ १२६७ ॥
ध्याता ध्येयं तथा ध्यानं यज्ञाश्च विविधास्तथा ।
सर्व मेतत्त्वमेवैकस्तत्वः किमपरं प्रभो ॥ १२६८ ॥
यन्नतोऽसि महाभाग तत्र मे संशयो महान् ।

इति नीलमते शक्रसंशयवर्णनम् ॥

बृहदश्व उवाच ।

एवमुक्तस्तु शक्रेण ब्रह्मा वचनमब्रवीत् ॥ १२६९ ॥
[4]मा मा शक्र वदे देवमभिज्ञातोऽसि पुत्रक ।
एष सर्वेश्वरः शक्र एष कारणकारणम् ॥ १२७० ॥

---

१ जगत्यस्मिन् हि कारणम् C, D. २ After the line 9 following lines occur in B:—

त्वया धृताः धारयन्ति त्वयैदं सचराचरम् ।
स्रष्टा त्वमसि सर्वस्य संहर्ता पालकस्तथा ।
यदुन्मीलयसे नेत्रे त्रैलोक्यस्योद्भवस्तदा ।
भवतीह जगन्नाथ यदा सुप्यसि वै तदा ।
तदेतदखिलं देव त्रैलोक्यं संप्रणश्यति ।
भूमिर्धृता धारयते त्वयेदं सचराचरम् ।
त्वया धृताः धारयन्ति तथैवापोऽखिलं जगत् ॥

३ षडि: C. ४ Lines 21 to 18 of page 104 not in C, D.

एष चाचिन्त्यमहिमा एष ब्रह्म सनातनम् ।
सएष सर्वकर्ता च सर्वज्ञश्च महेश्वरः ॥ १२७१ ॥
यदिच्छया जगदिदं वर्वर्ति सचराचरम् ।
यस्य शक्तिलता सेयं सूर्यचन्द्रात्मनः प्रभोः ॥ १२७२ ॥
पुष्पिताऽखिल मेवेदं जगद्भासयते भवात् ।
त्वमहं चापि यस्यैव शासने समवस्थितौ ॥ १२७३ ॥
मनाक् प्रच्यवने शक्र रुजार्त्तौ भवता क्वचित् ।
विभूतिमानसौ शक्र सर्व मस्य वशे स्थितम् ॥ १२७४ ॥
महेश्वरोऽसौ यस्यान्तं न विदु र्देवदानवाः ।
यस्यैषा मे कला शक्र विभूतिः स्वर्गलक्षणा ॥ १२७५ ॥
स एव भगवान् शंभुः सर्वलोकमहेश्वरः ।
अस्यैवेयं तनुः शक्र कलामात्रं विभो मतम् ॥ १२७६ ॥
नाहं अस्य तु तद्रूपं निरूपयितुमञ्जसा ।
शक्तोऽस्म्यनेन सत्वेन प्रसीदतु ममाप्यसौ ॥ १२७७ ॥
यथाऽहं तस्य श्रीर्विष्णुः परस्य परमात्मनः ।
परं तत्वं न जानामि स तथास्य जगत्पतिः ॥ १२७८ ॥
स एष त्रिजगन्नाथो धूर्जटिश्चन्द्रशेखरः ।
भूतिभूषितसर्वाङ्गः शूलभृत्सर्पभूषणः ॥ १२७९ ॥
एषाऽसौ परमा मूर्तिः शार्वी परमपावनी ।
तपसा महता युक्ता यत्नतोऽस्मि शतक्रतो ॥ १२८० ॥
तं च सर्वैः सुरैः साकं प्रणम्यैनं प्रसादय ।
एवमुक्तस्ततः शक्रः सर्वैः सुरगणैर्वृतः ॥ १२८१ ॥
तुष्टाव देवदेवेशं त्रिपुरान्तकरं हरम् ।
प्रसादाद्ब्राह्मणस्तस्य याथातथ्येन शंकरम् ॥ १२८२ ॥

शक्र उवाच ।

नमस्ते देवदेवेश मायावृतजगत्त्रय ।
यजमानो मही खंच तोयाग्नीन्द्वर्कवायवः ॥ १२८३ ॥
तनवस्ते विनिर्दिष्टा याभिर्व्याप्तं जगत्त्रयम् ।
ब्राह्मीं तनुं समास्थाय राजसीं त्वं जगद्गुरो ॥ १२८४ ॥

---

१ एषा तनुर्द्वितीया मे C, D. २ मायावृत D. ३ Lines 29 to the 2nd of page 105 not in C, D.

लोकान् सृजसि भूतात्मन् तव कार्यं न विद्यते।
पौरुषीं तनुमास्थाय सात्विकीं त्वं महेश्वर॥ १२८५॥
पालयस्यखिलं देव त्रैलोक्यं सात्विवात्स्थितः।
कालाख्यां तामसीं कृत्वा जगत्संहरासि तथा॥ १२८६॥
वृषरूपधरो धर्मो वाहनत्वमुपागतः[1]।
तथास्तेऽत्र जगन्नाथ प्रसीद परमेश्वर॥ १२८७॥
वामार्धं दयितास्थानं कथं[2] जातं तव प्रभो।
समाधिनिरतो नित्यं ब्रह्मचार्यधः भवान्॥ १२८८॥
नमः शशांकलेखांकजटाभार महेश्वर।
गंगातरङ्गनिर्धूत जटाभार नमोऽस्तुते॥ १२८९॥
त्रिपुरारे नमस्तेस्तु नमस्त्वन्धकघातिने।
कुशाग्रभिन्नदैत्यांश[4]रुधिरार्द्र नमोस्तु ते॥ १२९०॥
कपालमालिने तुभ्यं पार्वतीदयिताय च।
उग्रायुधाय भीमाय भीमायुधधराय च॥ [3]१२९१॥
ऊर्ध्वलिंगाय शीघ्राय क्रथाय क्रथनाय च।
मङ्गल्याय वरेण्याय महाहासाय[5] मीढुषे॥ १२९२॥
भीमाख्याय[6] भुसण्डाय व्यालयज्ञोपवीतिने।
क्षमस्व मम देवेश यन्मयासि न पूजितः॥ १२९३॥
तवैव मायया पूर्वं मोहितेन जगत्प्रभो।
प्रसन्नोऽसि ध्रुवं शम्भो येन ज्ञातोऽसि वै मया॥ १२९४॥
सुप्रसन्नोऽसि देवेश प्रणतोऽसि महेश्वर।

बृहदश्व उवाच।

एवं[7] स्तुतस्तु शक्रेण ब्रह्मणा ऋषिभिः सुरैः॥ १२९५॥
हंसरूपं तदा त्यक्त्वा स्वेन रूपेण शंकरः।
जगाम ब्रह्मणो यज्ञं देवानां दर्शनं तदा॥ १२९६॥
आनाययामास तदा देवदेवो वृषं मुदा[8]।
इत्थं त देवदेवेशः समाप्ते ब्रम्हणः क्रतौ॥ १२९७॥
सर्वदेवगणैः सार्धं ययौ कालोदकं सरः।
ददर्श नन्दिनं तत्र[9] शीततृद् क्षुत् समाकुलम्॥ १२९८॥

---

१ वाहनत्वे तवागतः C, D. २ कथं......नित्यं not in D. ३ शूलाय C, D. ४ दैत्यांशं B. ५ महाहंसाय D. ६ भीमाख्याय C. ७ एवमुक्त C, D. ८ देवीं देवो वृषं तथा C, D. ९ तत्रैव C, D.

[1]अतीव क्लिष्टगात्रं[2] च कृषितीन्द्रियमानसम् ।
मृत्युना नयमानेन बन्धुनेव[3] नराधिप ॥ १२९९ ॥
दृष्ट्वोवाच महादेवो नन्दिनं जगतां वरम् ।
वरं वरय भद्रं ते उत्तिष्ठोत्तिष्ठ पुत्रक ॥ १३०० ॥
मा[4] भैषीर्नेहिते मृत्युः कल्पकल्पान्तरेष्वपि ।
इति वाचं समाकर्ण्य महादेवस्य सत्फलाम् ॥ १३०१ ॥
उन्मील्य नेत्रे सहसा ददर्शाग्रे महेश्वरम् ।
दृष्ट्वा[5] देवं हरं देव्या पार्वत्या सहितं स्थितम् ॥ १३०२ ॥
सर्वैः देवगणैः सार्धं तत्याज मरणाद्भयम् ।
शिलां त्यक्त्वा समुत्थाय तोयमध्यात्ससंभ्रमम् ॥ १३०३ ॥
पूजयामास देवेशं वाग्भिरद्भिः प्रसूनकैः[6] ।
स चापि पूजितः शम्भुः प्रहसन् वाक्यमब्रवीत् १३०४ ॥

शंकर उवाच ।

रुद्रजाप्येन ते तात महता तपसा तथा ।
परितुष्टोऽस्मि भद्रं ते मत्समीपे निवत्स्यसि ॥ १३०५ ॥
अनेनैव शरीरेण नास्ति ते मृत्युतो भयम् ।
स्मरस्व पूर्वकं जन्म प्रतीहारो भवान् मम[8] ॥ १३०६ ॥
शिलादेन द्विजेन्द्रेण प्राप्तस्त्वं तपसा तदा ।
सत्पुत्रेण[7] तथा पुत्र शिलादस्तारितस्त्वया ॥ १३०७ ॥
गणेश्वरत्वमासाद्य मया सह निवत्स्यसि ।
अस्माद्योजनमात्रेण पूर्वभागी द्विजोत्तम[9] ॥ १३०८ ॥
त्वया सह निवत्स्यामि भूत्वा भूतेश्वराख्यया ।
तव नन्दिन् प्रतिष्ठानं वासिष्ठो भगवान् ऋषिः ॥ १३०९ ॥
कर्ता देशे शुभे तस्मिन् मम चाच्युत भूतले ।
सन्निधानं करिष्यामि तत्र नित्यं महं द्विज ॥ १३१० ॥
पूर्वोत्पन्नं[10] च यज्ज्येष्ठे शाश्वं लिंगं मम द्विज ।
तत्रापि सन्निधानं मे नित्यं विज्ञातुमर्हसि ॥ १३११ ॥

---

१ Line 1 not in C, D. २ तं B. ३ बन्धुनैव D. ४ Lines 5–7 not in C, D. ५ द्रष्टुं D. ६ तथैव च C. ७ तत् C. ८ तथा B, D. ९ गुणोत्तम B; गुणोमम C, D. १० Line 26 not in C.

ऋषिकोटिसहस्राणि मम [1]भक्त्या द्विजोत्तम ।
तत्र संस्नापयन्ति स्म ज्येष्ठेशं तं[2] सदैव तु ॥ १३१२ ॥
ब्रह्मन् दिव्येन तोयेन शुभेनोत्तरमानसम् ।
तेषां तपःप्रभावेण भक्त्या च मम पार्श्वद ॥ १३१३ ॥
सोदरस्य च नागस्य [3]स्नानं कृत्वा विधानतः ।
[4]गत्वा च शीघ्रं सद्विप्र तथैवोत्तरमानसम् ॥ १३१४ ॥
तत्रापि विधिवत्स्नानं विधाय दृढनिश्चयात् ।
[5]सुखं प्राप्तो महाभाग तत्र रंस्यासि [6]पुत्रक ॥ १३१५ ॥
[7]तस्माद्देशात्तथा याति दक्षिणेण महानदी ।
हिरण्याभाम्भसा पूर्णा नाम्ना कनकवाहिनी ॥ १३१६ ॥
[8]वसाम्यहं च ज्येष्ठेशे भूतैः सह [9]तथोमया ।
[10]वस त्वमपि सद्विप्र मन्निष्ठो मत्परायणः ॥ १३१७ ॥
प्राकाम्येण वसन्नित्यं नियमाचारतत्परः ।
विशुद्धप्रकृतिर्भूत्वा सर्व[11]भूताभयंकरः ॥ १३१८ ॥
मत्समीपमथाभ्येहि देहेनानेन पुत्रक ।
एवमुक्त्वा तु देवेशो नन्दिनं प्रणतं स्थितम् ॥ १३१९ ॥
मृत्युं विसर्जयामास सान्त्वयित्वा सुरारिहा ।
नन्दिनं [12]च समादाय दृष्ट्वा चोत्तरमानसं ॥ १३२० ॥
तस्यैव सरसोऽभ्यासे शृङ्गं त्रैलोक्यविश्रुतम् ।
[13]अत्युच्छ्रितं समाभाति दृष्टं पुण्यप्रवर्धकम् ॥ १३२१ ॥
हरमुकुटमिति ख्यातं आरुरोह मुदान्वितः ।
[14]यत्र सन्निहितो नित्यं देवदेवो महेश्वरः ॥ १३२२ ॥
[15]भयदाता च दैत्यानां सुराणामभयप्रदः ।
ज्येष्ठेश्वरसमीपे तु वसिष्ठोऽपि महायशाः ॥ १३२३ ॥
सर्वैर्देवगणैः सार्धं [16]दध्रे भूतेश्वरं हरम् ।
तस्यैव पश्चिमां मूर्तिं स चकाराथ नन्दिनम् ॥ १३२४ ॥

---

१ भक्ताः D. २ ते C, D. ३ स्नातुमुत्तरमानसः C, D. ४ Lines 6, 7 not in C, D. ५ स्वयं C, D. ६ सर्वदा D. ७ यस्मात् C, D. ८ ज्येष्ठेशे वसते भूतैः वस प्राकाम्यतः द्विज C, D. ९ ततो A. १० Lines 12–14 not in C, D. ११ भूत्वा A. १२ स C, D. १३ Line 20 not in C, . १४ तत्र C. १५ Line 23 not in C. १६ चक्रे C,D.

एवं कृते [1]ययुर्देवा यथागतमरिन्दम ।
सस्नुस्तीर्थानि च तथा ऋषयश्च तपोधनाः ॥ १३२५ ॥
एवं हि भृगुशापेन हरस्यानुग्रहेण च ।
तत्र संनिहितो नन्दी तत्प्रीत्या च महेश्वरः ॥ १३२६ ॥
नन्दीश्वरस्य या मूर्ति र्दुराचारैर्न दृश्यते ।
भूतेश्वरं तथा दृष्ट्वा मुच्यते सर्वकिल्विषैः ॥ १३२७ ॥
स्नाता तु सोदरे पुण्ये दृष्ट्वा भूतेश्वरं हरम् ।
ज्येष्ठेश्वरं नन्दिनं च गाणपत्यमवाप्नुयात् ॥ १३२८ ॥

[2]इति श्री नीलमते भरतगिरि मुण्ड पृष्ठ-कृपाणी तीर्थ महासरो-हंसद्वार-वाष्प बिन्दु-कालोदक-वसिष्ठाश्रम-ज्येष्ठेश्वर-सोदरोत्तरमानस-भूतेश्वर-वर्णनं नाम नन्दिचरितं समाप्तम् ॥

गोनन्द उवाच ।

[3]कपटेश्वर इत्युक्तं देवदेवस्य शूलिनः ।
पुण्यमायतनं तस्य समुत्पत्तिं वदस्व मे ॥ १३२९ ॥
संशयो मे महान् ब्रह्मन् कपटेश्वरः कीर्तनात् ।
किमर्थं भगवान् शंभुः प्रोच्यते कपटेश्वरः ॥ १३३० ॥

बृहदश्व उवाच ।

पुण्ये दृशद्वतीतीरे कुरुक्षेत्रे नराधिप ।
ऋषिकोटिः समुत्तस्थौ तपः परममास्थिता ॥ १३३१ ॥
द्रष्टुं देवेश्वरं रुद्रं [4]महेशानमुमापतिम् ।
[5]धूर्जटिं परमाह्लादमूर्तिं त्रिपुरसूदनम् ॥ १३३२ ॥
अतीव खिन्नान् तान् दृष्ट्वा [6]सद्भक्त्या परमेश्वरः ।
तानाह भगवान् स्वप्ने [7]कश्मीरान् द्रुतमाशुगाः ॥ १३३३ ॥
व्रजध्वं यत्र नागस्य भुवनं विमलं महत् ।
कपटे तत्र दास्यामि दर्शनं भवतामहम् ॥ १३३४ ॥
एतत्स्वप्नं निशम्याथ कल्ये उक्त्वा परस्परम् ।
[8]कश्मीरान् सहिता जग्मुः शंभुं देवं दिदृक्षवः ॥ १३३५ ॥

---

१ ते प्रययुः D. २ इति नीलमते भूतेश्वर माहात्म्यम् C, D. ३ कपटेश्वरं D. ४ महेशानं......तान् दृष्ट्वा not in D. ५ Lines 21, 22 not in C. ६ तद्भक्त्या D. ७ कश्मीरं D. ८ कश्मीरां महितां C, D.

ते प्राप्य तस्य नागस्य भुवने[१] जल मप्यपि ।
न[२] पश्यन्ति स्म च यदा तदा ते सर्वतोमुखम् ॥ १३३६ ॥
काष्ठानि[३] चालयामासु रतिहर्षसमन्विताः ।
इति प्रीत्या च ते तत्र काष्ठानि परितो यदा ॥ १३३७ ॥
चालयामासुरमलं वारि तत्रोषितं तदा ।
इति[४] काष्ठानि संचाल्य करैस्ते ऋषिसत्तमाः ॥ १३३८ ॥
स्नातुमत्राययुः सर्वे[५] स्वशरीरेण रुद्रताम् ।
वशिष्ठो[६] ब्राह्मणस्त्वेको नाम्ना गौरपराशरः ॥ १३३९ ॥
न सस्नौ न च तत् काष्ठं स्पृशतिस्म कुतूहलात् ।
तत्रस्थः शोषयामास निराहारः कलेवरम् ॥ १३४० ॥
तमुवाच हरः स्वप्ने किमर्थं क्लिश्यसे द्विज ।
स्नात्वा संस्पृश्य काष्ठानि शीघ्रंत्वं ब्रज रुद्रताम् ॥ १३४१ ॥
इत्युक्तोऽसौ तदा स्वप्ने शम्भुना परमेष्ठिना ।
तमुवाच द्विजो रुद्रं सुप्रीतः प्राञ्जलिःस्थितः ॥ १३४२ ॥
सत्यं रुद्रत्वमासाद्य दृश्यसे त्वं जगद्गुरो ।
किन्त्वदृष्टे हि देवेशे नास्ति मे मनसो धृतिः ॥ १३४३ ॥
रूपेण भवने दास्ये त्वयोक्तं दर्शनं प्रभो ।
तदप्राप्य न यास्यामि न च भोदयामि शंकर ॥ १३४४ ॥
तमुवाच ततो भूयः प्रहसन्निव शंकरः ।
दत्तं तु काष्ठरूपेण मया तेषां तु दर्शनम् ॥ १३४५ ॥
ते मां दृष्ट्वैव संप्राप्ताः रुद्रत्वं तत्तथा द्विज ।
तवाभिषेकेन तपसा वरं दद्मि तवे[८]प्सितम् ॥ १३४६ ॥
तत्त्वं वरय भद्रं ते रुद्रतां च तथा ब्रज ।

मोर पराशर उवाच ।

वर[९]श्चेद्दीयते देव मम कामाङ्गनाशन ॥ १३४७ ॥
ऋषिभिस्त्वं यथा दृष्टः काष्ठ[१०]रूपी महेश्वरः ।
तथा त्वं देहि सर्वस्य जनस्येह निदर्शनम् ॥ १३४८ ॥

---

१ भवेन A. २ न पश्यति जलं काष्ठे सर्वतः परिवारिते C, D. ३ Lir 3–5 not in C, D. ४ तत्र D. ५ स्वप्ने C, D. ६ Lines 8- not in C, D. ७ च D. ८ यथे—D. ९ वरं A, C. १० काम—A

सर्वकालं जगन्नाथ लोकाः क्लिश्यन्ति पाप्मना ।[1]
यथा त्वद्दर्शनादत्र पापशुद्धौ महाधियः ॥ १३४९ ॥
विशुद्धपापाः यास्यन्ति सद्गतिं परमेश्वर ।

परमेश्वर उवाच ।

द्रक्ष्यन्ति ये जनाः नाम काष्ठं रूपं समास्थितम् ॥ १३५० ॥
कदाचिद्विजशार्दूल सर्वकालं तु न द्विज ।
ते[2] धूताशेष पाप्मानो रुद्रलोकं व्रजन्ति च ॥ १३५१ ॥
जलरूपोऽस्म्यहं विप्र नन्दश्च सौ काष्ठरूपभाक् ।
द्वयोः समागमे पूर्णं दर्शनं मम सुव्रत ॥ १३५२ ॥
अयं च सततं नन्दी काष्ठरूपी गणोत्तम ।
दर्शनं दास्यति नृणां तदनुग्रहकाम्यया ॥ १३५३ ॥
मां[3] च दृष्ट्वा न यास्यन्ति स्वशरीरेण रुद्रताम् ।
काष्ठरूपेण[4] युक्तं मां दृष्ट्वा सद्गतिभागिनः ॥ १३५४ ॥
कपटेन च दास्यामि नराणां[5] दर्शनं यदा ।
तदा संज्ञामवाप्स्यामि कपटेश्वर इत्यतः ॥ १३५५ ॥
तोयस्य बहुलीभावः[6] देशेऽस्मिन् ब्राह्मणोत्तम ।
दर्शनस्य मदीयस्य पुर्वरूपं भविष्यति ॥ १३५६ ॥
इत्येतत्कथितं तुभ्यं कपटेश्वरसंगतम्[7] ।
वद राजन् किमन्यत्ते श्रोतुमुत्का प्रवर्तते ॥ १३५७ ॥

इति नीलमते कपटेश्वर माहात्म्यम् ॥

गोनन्द उवाच ।

भगवन् श्रोतुमिच्छामि विष्णोरायतनान्यहम् ।
कश्मीरेषु[8] फलमेषां सन्निधानाद्धरेः परं ॥ १३५८ ॥

बृहदश्व उवाच ।

नित्यं सन्निहितो देवो राजन् चक्रधरो हरिः ।
तं दृष्ट्वा पुण्डरीकाक्षं दशदिनफलं लभेत्[9] ॥ १३५९ ॥
नित्यं सन्निहितो देवो नरसिंहो जनार्दनः ।
तं दृष्ट्वा देवदेवेशमश्वमेधफलोदयः ॥ १३६० ॥

---

१ Lines 2, 3 not in C, D. २ Lines 7–9 not in C, D. ३ तं C, D. ४ Line 13 not in C, D. ५ नराणां......वाप्स्यामि not in A. ६ बहुलीभावे D. ७ संभवं D. ८ कश्मीरायां फलं तेषां येषां सन्निहितो हरिः C. ९ फलं लभेत् C, D.

[1]तथा बहुसरो नाम्ना नित्यं सन्निहितो हरिः ।
देवः सन्निहितो राजन् नित्यं देवसरस्यपि ॥ १३६१ ॥
[2]तथा सन्निहितो राजन् पुण्ये देव सुरेश्वर ।
वासिष्ठायामथैवात्र कद्रूर्वाचायां तथैव च ॥ १३६२ ॥
[3]तथैव विनतार्चायां गौतम्यां च नरेश्वर ।
वि[4]लोक्य केशवार्चांश्च भक्तिश्रद्धा-पुरस्सरम् ॥ १३६३ ॥
[5]एताः पुमान् शुद्धदेहो व[7]ह्निष्टोमफलं लभेत् ।
महापद्मस्य सरसः पुण्ये कूले तथोत्तरे ॥ १३६४ ॥
नृसिंहमपरं दृष्ट्वा [6]ज्योतिष्टोमफलं लभेत् ।
[8]शक्रस्थापितमालोक्य वरुणेन तथैव च ॥ १३६५ ॥
ब्रह्मणा च धनेशेन यमेन च हरेण च ।
दिवाकरेण सौम्येन वह्निना पवनेन च ॥ १३६६ ॥
कश्यपेनाऽथ भृगुना पुलस्त्येन तथात्रिणा ।
भूतस्वामि-महास्वामि-शतशृंगगदाधरान् ॥ १३६७ ॥
मेरोर्भुवनपार्श्वे च भृगुस्वा[9]मिजनार्दनम् ।
तैत्तिरियेश्वरं देवं दे[10]वकस्वामिनं तथा ॥ १३६८ ॥
भवस्य च तथा पार्श्वे रामस्वामिजनार्दनम् ।
देवं नारायणस्था[11]ने पश्चिमे तु वरप्रदम् ॥ १३६९ ॥
गजेन्द्रमोक्षणं देवं वराहस्य समीपगम् ।
वराहं च नृसिंहं च बहुरूपं वरप्रदम् ॥ १३७० ॥
सप्तर्षीणां तथैवार्चा सुमुखस्य समीपगा ।
तुंगवासं च वरदं वरदं च स्वयंभुवम् ॥ १३७१ ॥
गुहावासं च योगीशं अनन्तं कपिलं मुनिम् ।
अश्वशीर्षं तथा मत्स्यं हंसं कूर्मं तथैव च ॥ १३७२ ॥
[12]उत्तुंगस्वामिनं देवं बालखिल्यकृतं तथा ।
गरुडं जलवासं च देवं भोगमयं तथा ॥ १३७३ ॥

---

१ Line 1 not in C, D. २ Line 3 not in A, B. ३ सन्निहितो गौतम्यां पार्थिवोत्तम C, D. ४ Line 6 not in C, D. ५ एतां द्रष्ट्वा केशवार्चा C, D. ६ अग्निः D. ७ वह्नि—C. ८ देवं शक्रकृतं द्रष्ट्वा वरुणेप तथा कृतम् C, D. ९ स्वाम्यं C. १० धेनुक–D. ११ स्थानं C, D. १२ उत्तंक D.

दृष्ट्वैकैकमथैतेभ्यो दशधेनुफलं लभेत् ।
[1]वैण्येन पृथुना पूर्वं मगधेषु प्रतिष्ठितम् ॥ १३७४ ॥
दृष्ट्वाप्नोति हि फलं पुण्डरीकस्य मानवः ।
गृध्रकूटे तथैवार्चा तथा भृगुकृतां शुभम् ॥ १३७५ ॥
आश्रमस्वामिना[2]प्रोक्तां पर्वतादवतारिताम् ।
स्वदेशपार्श्वे रामेण भार्गवेण महात्मना ॥ १३७६ ॥
दृष्ट्वैव सर्वपापेभ्यो मुच्यते नात्र संशयः ।

गोनन्द उवाच ।

गृध्रकूटाद्गिरिश्रेष्ठात् किमर्थं भृगुनिर्मिता ॥ १३७७ ॥
अर्चावतारिता ब्रह्मन् स्वाश्रमस्य समीपतः ।

[3]बृहदश्व उवाच ।

पुरा पितृवधादृर्चा रामः क्षत्रियमर्दनः ॥ १३७८ ॥
त्रिःसप्तकृत्वः पृथिवीं कृत्वा निःक्षत्रियां [4]तथा ।
[5]एकविंशे तथाघाते प्राप्ते केचित्तु क्षत्रियाः ॥ १३७९ ॥
गिरिदुर्गमनुप्राप्ताः कश्मीरेषु नृपोत्तम ।
रामोऽनुपदमागम्य तान् जघानातिरोषणः ॥ १३८० ॥
तेभ्योऽपि क्षत्रियाः केचित् [6]हतशेषा महीपते ।
तद्भयेन गतास्त्यक्त्वा कश्मीरान् राजसत्तम ॥ १३८१ ॥
नदी मधुमती यत्र तथान्या [7]नृपनिर्मला ।
[8]तत्रापि रामस्तान् गत्वा [9]पातयामास रोषतः ॥ १३८२ ॥
निःशेषान् क्षत्रियान् [10]कृत्वा रुधिराक्तकरस्तथा ।
प्रतिष्ठामकरोत् राजन् केशवस्य महात्मनः ॥ १३८३ ॥
राजावासमिति प्रोक्तं सर्वलोकेषु विश्रुतम् ।
तद्दृष्ट्वा शीघ्रमाप्नोति कार्यसिद्धिं नरोत्तमः ॥ १३ ४ ॥
रौद्रभावेन रामेण यदार्चा विनिर्मिता ।
रौद्रभावमथास्थाय तस्यां सन्निहितो [11]हरिः ॥ १३८५ ॥
अर्चयन्ति च रौद्रेण तां च भावेन मानवाः ।
रौद्रभावान्महीनाथ नित्यं पशुवधादिना ॥ १३८६ ॥

---

१ वैश्येन A, B. २ इत्युक्त्वा D. ३ Line 11 not in A. ४ पुरा C, D. ५ एक विंशति मे C, D. ६ हत—C, D. ७ रजः C. ८ तथापि D. ९ घातयामास D. १० हत्वा C, D. ११ हरः C, D.

इति रामः स धर्मात्मा पूर्वं क्षत्रियशोणितैः ।
कृत्वा कुण्डान् जगामाथ कुरुक्षेत्रं [2]महामतिः ॥ १३८७ ॥
पितॄन् स तेष्वथाभ्यर्च्य मुदं लेभे [3]वैरारिहा ।
तमूचुः पितरः प्रीताः राम राम महाभुज ॥ १३८८ ॥
[4]कर्मणोऽस्मान्निवर्तस्व तीर्थयात्रां तथा कुरु ।
पलायमानान् भीतान् च हतवान सि पुत्रक ॥ १३८९ ॥
तेन पापेन ते पुत्र शरीरे कलुषं स्थितम् ।
तस्माद्व्रजस्व तीर्थानि पावनार्थमिहात्मनः ॥ १३९० ॥
भविष्यसि यथावत्त्वं शुद्धदेहश्च पुत्रक ।
[5]न चापैति हि ते तावत् [6]कराभ्यां रुधिरं दृढम् ॥ १३९१ ॥
यदा करौ विरुधिरौ तव पुत्र भविष्यतः ।
तदा त्वं निर्मली भूतस्तपः कुरु यथा सुखम् ॥ १३९२ ॥
एवमुक्तस्तदा रामः पितृभिः पूजित स्ततः ।
चकार तीर्थयात्रां वै सर्वतीर्थेषु पार्थिव ॥ १३९३ ॥
कृत्वा जगाम कश्मीरान् [7]तथैवासौ महीपतिः ।
आप्लुत्य तीर्थेषु तदा गृध्रकूटमुपागमत् ॥ १३९४ ॥
शुद्धा सरस्वती चैव संयोगं यत्र गच्छतः ।
तत्र स्नातस्य रामस्य करौ शुद्धिमुपागतौ ॥ १३९५ ॥
तस्य तीर्थस्य रामो ऽपि वरं प्रादान्महायशः ।
अस्मिन्तीर्थे नरः स्नात्वा सर्वं मुच्यति किल्विषम् ॥ १३९६ ॥
शुद्धदेह स्तदा गन्ता भृगूणां समलोकताम् ।
एवं स निर्मलीभूतो रामः परबलार्दनः ॥ १३९७ ॥
पृथ्वीश्वर मथासाद्य तपस्तेपे सुदारुणम् ।
नदीं सम्प्राप्य पुण्योदां तदा ब्रह्मसरोद्भवाम् ॥ १३९८ ॥
यदा तस्यां तु रामेण तपस्तप्तं महात्मना ।
तदा रामह्रदेत्येवं नदी सा भुवि विश्रुता ॥ १३९९ ॥
तत्र संवत्सरं कृत्वा रामोऽपि परमं तपः ।
तपोऽर्थे गृध्रकूटस्य तदा मूलं जगाम सः ॥ १४०० ॥

---

१ तत्र C, D. २ महीपते C, D. ३ वतारिहा D. ४ कर्मणोमात् C, D.
५ नापेष्यति C, D. ६ करेभ्यः D. ७ तथापि स महीपते C, D.

यत्रास्य चागतौ शुद्धिं करौ पूर्वं महीपते ।
तस्माददूरे पुण्योदामनन्तस्य महात्मनः ॥ १४०१ ॥
भुवनं नागराजस्य तपस्तेपे स तत्र हि ।
प्रतिष्ठानं तथा चक्रे दे[2]वदेवस्य शार्ङ्गिणः ॥ १४०२ ॥
तत्रासता [3]तदा तस्य रामस्याक्लिष्ठ कर्मणः ।
आश्रमस्वामिनं द्रष्टुं प्रययौ ब्राह्मणोत्तमः ॥ १४०३ ॥
दातुं गां तस्य देवस्य [4]तत्रादृष्ट्वा च तं मुनिम् ।
जगाम तां मृगयितुं तामादाय तु सत्वरः ॥ १४०४ ॥
तत्रासावपथे प्राणान् तस्मिन् तत्याज पर्वते ।
त्यक्त्वा गां च महीपाल ब्राह्मणोऽपि निवर्तितः ॥ १४०५ ॥
प्रायश्चित्तीयतां प्राप्य दुःखशोकसमन्वितः ।
स रामाश्रममागत्य [5]वासिष्ठो धर्मनिश्चलः ॥ १४०६ ॥
यथावृत्त मथाचख्यौ रामाय सुमहात्मने ।
तमुवाच ततो रामः पश्यन् दिव्येन चक्षुषा ॥ १४०७ ॥
दिव्युत्पन्न द्विजश्रेष्ठ दिव्यनारी मनोरमा ।
देवर्षिं वञ्चयामास गोरूपेणथ नारदम् ॥ १४०८ ॥
तेन विज्ञाय सा शप्ता तव गोत्वमुपागता ।
तेनैव तस्य शापान्तः कृतो ब्राह्मणसत्तम ॥ १४०९ ॥
गोस्वामिना नीयमाना गृध्रकूटे शिलोच्चये ।
तनुं त्यक्त्वा ततो भूयो भविष्यसि वराप्सरा ॥ १४१० ॥
मोक्षिता सा त्वया शापात् न तेऽस्ति द्विज पातकम् ।
गोदानफलसंयुक्तो मत्प्रसादाद्भविष्यसि ॥ १४११ ॥
[6]गच्छ पश्य स्वदेवेशं तथाश्रमनिवासिनम् ।
त्वं दृष्ट्वा सर्वपापेभ्यो विनिर्मुक्तो भविष्यसि ॥ १४१२ ॥
अहं हि देवप्रवरमाराध्य मधुसूदनम् ।
इहानयिष्ये तामर्चां लोक[7]स्य हितकाम्यया ॥ १४१३ ॥
[8]प्रायशो धेनुदानेन लोकोऽर्चयति तं हरिम् ।
पर्वतारे हंण क्लेशो महान् विप्र गवां तथा ॥ १४१४ ॥

---

१ महात्मन: C. D. २ तस्य . ३ ततः C, D. ४ तत्रादृष्ट्वा......मृगयितुं not in D. ५ ब्राह्मणों C. ६ Lines 23, 24 not in D. ७ द्विजेन्द्रेण भविष्यति D. ८ Lines 27 to the 1st of page 115 not in C, D.

आनीतायामिहार्चायां द्विजेन्द्र न भविष्यति[1] ।
तस्मिन्नेव ततः स्थाने तपस्तेपे[2] स भार्गवः ॥ १४१५ ॥
ततः संवत्सरान्ते[3] च ददर्श मधुसूदनम् ।
दिव्येन चक्षुषा राजन् प्रसन्नं पुरतः[4] स्थितम् ॥ १४१६ ॥
तुषारचयसंकाशं श्वेताम्बरविराजितम् ।
चतुर्मुखं चतुर्बाहुं चतुर्विधाश्रयान्वितम् ॥ १४१७ ॥
मुकुटेनार्कवर्णेन कुण्डलैश्च विभूषितम् ।
शरीरधारिभिश्चास्त्रैरुदीरितजयस्वनम् ॥ १४१८ ॥
तं[5] दृष्ट्वा प्रणतो राजन् तुष्टाव मधुसूदनम् ।
राम उवाच ।
नमस्ते देवदेवेश प्रणतार्तिविनाशन ॥ १४१९ ॥
चतुर्मूर्ते महामूर्ते चतुर्वेद महाभुज ।
गोविन्द पुण्डरीकाक्ष वराहाद्य नमोऽस्तु ते ॥ १४२० ॥
दंष्ट्राग्रोद्धृतभूभाग संचूर्णितशिलोच्चय ।
त्वं सदैव वराहोऽसि येनेदं धार्यते जगत् ॥ १४२१ ॥
करजाग्रविनिर्भिन्नहिरण्यकशिपूरसि ।
नमस्तुभ्यं नृसिंहाय ज्वालामालाकुलात्मने ॥ १४२२ ॥
त्रिविक्रमाय देवाय नमस्ते विजिगीषवे ।
सोमभूषितवक्त्राय नमोऽश्वशिरसे विभो ॥ १४२३ ॥
त्वं देवः सर्वदेवानां दुःखितानां परा गतिः ।
इन्द्रियाणीन्द्रियार्थाश्च महाभूतानि यानि च ॥ १४२४ ॥
मनोबुद्धिस्तथैवात्मा व्यक्तं[6] यत्पुरुषोद्भवम् ।
सत्त्वं रजस्तमश्चैव ब्रह्मविष्णुमहेश्वराः ॥ १४२५ ॥
त्वया सर्वमिदं व्याप्तं त्रैलोक्यं सचराचरम् ।
त्वया विना न पश्यामि किञ्चिदेव जगत्त्रये ॥ १४२६ ॥
त्वत्तेजसा यदा देव निहताः क्षत्रिया भुवि ।
कोटिसंख्याश्च निहता सिंहिकेषा महाबलाः ॥ १४२७ ॥
सूक्ष्मातिसूक्ष्म देवेश महद्भ्योऽसि[7] महत्तमः ।
क्षीरोदकन्यादयित कामरूप नमोऽस्तु ते ॥ १४२८ ॥

---

१ भविष्यसि A. २ सुदारुण D. ३ संवत्सरस्यान्ते B, D. ४ अग्रतो C.
५ Line 9 not in D. ६ अव्यक्तं पुरुषोद्भवं C, D. ७ अपि C, D.

कामकामद कामारिपूजिताघविनाशन ।
चतुर्भिः सततं वक्त्रैः पद्मजन्माभिसंस्तुतः ॥ १४२९ ॥
[1]कां स्तुतिं ते करिष्यामि जगत्कारणकारण ।
स्तुतस्त्रैलोक्यनाथेश सर्वथैव नमोऽस्तु ते ॥ १४३० ॥
नमः पार्श्वेषु ते देव नमस्ते सर्वतः प्रभो ।
पर्वतेषु समुद्रेषु लोकेषु गगने तथा ॥ १४३१ ॥
नमस्तेऽस्तु नमस्तेऽस्तु सर्वत्रैव नमोऽस्तु ते ।
एवं [2]स्तुतः स रामेण राममाह जनार्दनः ॥ १४३२ ॥
राम राम महाबाहो वरं वरय सुव्रत ।
वीर्येण तपसा देव स्तोत्रेणाऽनेन सुव्रत ॥ १४३३ ॥
परितुष्टोऽस्मि ते वत्स यथा नान्यस्य कस्यचित् ।

श्रीराम उवाच ।

भृगुणा निर्मिता मर्चा गृध्रकूटाग्रतः प्रभो ॥ १४३४ ॥
इहानयितुमिच्छामि तन्मेऽनुज्ञातुमर्हसि ।

श्रीभगवान् उवाच ।

एवं कुरु यथेष्टं ते जनो मुच्यते किल्बिषात् ॥ १४३५ ॥
क्लेशं विना भृगुश्रेष्ठ कृतस्तेऽनुग्रहो मया ।

बृहदश्व उवाच ।

एवमुक्त्वा ययौ विष्णुस्तदान्तर्धानमीश्वरः ॥ १४३६ ॥
रामोऽपि गृध्रकूटात्तां तदार्चामवतारयत् ।
मध्ये चकार तां भक्त्या स्वार्चामनन्तकूटयोः ॥ १४३७ ॥
तां दृष्ट्वा फलमाप्नोति पुण्डरीकस्य मानवः ।
रामोऽपि तपसा दीप्तो वाजिमेधे महाक्रतौ ॥ १४३८ ॥
दत्त्वा महीं कश्यपाय महेन्द्रं गिरि[3]माययौ ।
एवं रामेण धर्मज्ञ गृध्रकूटान्नगोत्तमात् ॥ १४३९ ॥
स्वाश्रमस्य समीपे तु सानीता प्रतिमा शुभा ।

इति नीलमते आश्रमस्वामिमाहात्म्यवर्णनम् ॥

गोनन्द उवाच ।

देशस्यास्य समीपे तु तीर्थानि वदतां वर ॥ १४४० ॥

---

१ कामोहं C, D. २ स्तुतस्तु C, D. ३ पर्वतं गतः C, D.

कथयस्वामितप्रज्ञ [1]कस्य तीर्थस्य किं फलम् ।
बृहदश्व उवाच ।
आरोह्य गृध्रकूटं तु गोसहस्रफलं लभेत् ॥ १४४१ ॥
[2]कुमुनारीं नदीं प्राप्य स्नातो मुच्येत किल्बिषैः ।
वितस्ता-मधुमत्योश्च संगमे त्रिदिवं व्रजेत् ॥ १४४२ ॥
इन्द्रकीलं समारुह्य गोसहस्रफलं लभेत् ।
[3]दृष्ट्वा चक्रेशमाप्नोति वह्निष्टोमफलं नरः ॥ १४४३ ॥
तथा मधुमतीतीरे शाण्डिल्येन निवेशिताम् ।
दृष्ट्वा दुर्गामवाप्नोति काममेव यथेप्सितम् ॥ १४४४ ॥
तत्रैव शाण्डिली नाम्नी नदी पापनिसूदिनी ।
तस्यां स्नातो दिवं याति पुरुषो गतकल्मषः ॥ १४४५ ॥
शाण्डिलीमधुमत्योश्च स्नातो यः संगमे नरः ।
सर्वपापविनिर्मुक्तः स्वर्गलोकं स गच्छति ॥ १४४६ ॥
राजवासं हरिं दृष्ट्वा [4]काम्यं प्राप्नोत्यभीप्सितम् ।
रजोविनिर्मलं प्राप्य स्नात्वा मुच्यते किल्बिषैः ॥ १४४७ ॥
तस्यां देवी उमा स्नात्वा प्रथमं तु रजोवती ।
दृष्ट्वा च गौरीशिखरं चन्द्रलोकमवाप्नुयात् ॥ १४४८ ॥
पूर्वमासीदुमा राजन्नीलोत्पलसमप्रभा ।
सा तत्र तपसा लेभे गौरवर्णं मनोहरम् ॥ १४४९ ॥
कृष्णपक्षेऽपि तं शैलं सज्योत्स्नमिव मानद ।
पश्यन्ति मानवा नित्यं तत्तत्र महदद्भुतम् ॥ १४५० ॥
[5]तलेलां भूजलां पुण्यामवगाह्य पृथक् पृथक् ।
तुल्यं फलमवाप्नोति गोशतस्य [6]महीपते ॥ १४५१ ॥
तयोस्तु संगमे स्नात्वा वाजपेयफलं लभेत् ।
मधुमत्यास्तयोश्चैव स्नातस्य नृप संगमे ॥ १४५२ ॥
कथितं मुनिभिः पुण्यमश्व[7]दानसमं भुवि ।
ततः [8]प्रभवमासाद्य मधुमत्याः मनोहरम् ॥ १४५३ ॥
सर्वपापविनिर्मुक्तो रुद्रलोके महीयते ।
उत्तरे मानसे स्नात्वा गोसहस्रफलं लभेत् ॥ १४५४ ॥

---

१ कस्मिन् तीर्थे फलं च किम् C, D. २ Line 4 not in C, D. ३ Line 7 not in A. ४ कार्यं A, B. ५ तललां D. ६ स मानव C, D. ७—दानस्य यत्फलं C, D. ८ प्रभावं C, D.

पितरस्तर्पितास्तत्र कामान्यच्छन्त्यभीप्सितम् ।
[1]हरमुण्डं नरो स्नात्वा दशगोधफलं नरः ॥ १४५५ ॥
[2]आरुह्य तदवाप्नोति राजसूयफलं नरः ।
तत्र गङ्गा सरित् श्रेष्ठा चन्द्रभ्रष्टा प्रतिष्ठिता ॥ १४५६ ॥
यस्यां स्नातस्य पूयन्ते सर्वपापान्यसंशयम् ।
राजसूयमवाप्नोति गंगामानुषसंगमे ॥ १६५७ ॥
देवतीर्थे नरः स्नात्वा [3]भवत्यमरपूजितः ।
बालखिल्ये कृतेऽगस्त्ये तुल्यतेजा महर्षिभिः ॥ १४५८ ॥
कालोदकं नन्दिकुण्डं शंखच[4]क्रं गदा तथा ।
पद्मं स कपिलातीर्थं तीर्थौ वातिकशुण्डिकौ ॥ १४५९ ॥
तीर्थमप्सरसां पुण्यं ब्रह्मणः परमेष्ठिनः ।
कृपाणीतीर्थमासाद्य प्रत्येकं गोशतं लभेत् ॥ १४६० ॥
कालोदकं यत्र याति नदी मानससंभवा ।
ततः स्नातस्य पूयन्ते सर्वपापान्यशेषतः ॥ १४६१ ॥
देववध्वस्तथा पुण्याः पुण्यं सूर्यसरः स्मृतम् ।
तारासरः चन्द्रसरः पुण्यं कालुषकं महत् ॥ १४६२ ॥
ब्रह्मणो यागभूमिश्च तत्र पुण्या महीपते ।
[5]चक्रतीर्थं देवतीर्थं तीर्थं ब्राह्मणकुण्डिका ॥ १४६३ ॥
[6]दृष्ट्वैकैकमथैतेभ्यो गोशतस्य फलं लभेत् ।
हंसद्वारे तु संगम्य स्वर्गमाप्नोत्यसंशयम् ॥ १४६४ ॥
सिन्धुप्रभवमासाद्य राजसूयफलं लभेत् ।
पुण्डरीकमवाप्नोति योऽत्राभ्येति धृतव्रतः ॥ १४६५ ॥
तत्राग्नितीर्थं दृष्ट्वैव वह्निलोके महीयते ।
नदी चित्रप्रथा पुण्या मृगनन्दा मृगा तथा ॥ १४६६ ॥
गोदावरी वैतरणी तथा मन्दाकिनी शुभा ।
चन्द्रभागा गोमती च सर्वपापभयापहा ॥ १४६७ ॥
स्नात्वा सुविधिनाप्नोति गोशतस्य फलं नरः ।
यत्र चित्रपथा पुण्या मधुरा च महानदी ॥ १४६८ ॥

---

१ हरमुण्डे नरः स्नात्वा D. २ Line 3 not in A, B. ३ भवत्युत्तरमानसे C, D. ४ चक्रे D; चक्रो C. ५ शक्र—C, D. ६ Line 19 to the 21st of page 119 not in C, D.

गोदावरी तथा पुण्या तथा मधुमती वरा ।
पके भवन्ति स्नातस्य तत्र नश्यन्ति किल्विषम् ॥ १४६९ ॥
शर्वलोकमवाप्नोति पुनाति स्वकुलं नरः ।
[1]भेनुवायां नरः स्नात्वा स्नात्वा बिन्दुसरस्यपि ॥ १४७० ॥
सन्ध्यां नाम नदीं दृष्ट्वा मुच्यते सर्वकिल्विषैः ।
तथा चैता महानद्यः कथितास्ते महीपते ॥ १४७१ ॥
तासां तु संगमः पुण्यः स्वर्गलोकफलप्रदः ।
चित्रकूटगिरिः पुण्यो गौरी यत्र विवाहिता ॥ १४७२ ॥
तत्रादिमं गव्यसरः पञ्च गव्यसरः पृथक् ।
तथान्ये पञ्च भूपाल पुण्यं तैलसरः परम् ॥ १४७३ ॥
उद्वर्तनसरः पुण्यं पुण्यं चाप्यतसीसरः ।
सिद्धार्थकसरस्तत्र तथामलकवारिणः ॥ १४७४ ॥
मधुपर्कसरः पुण्यं पुण्यमुष्णोदकं तथा ।
एकमेकमथैतेभ्यो दृष्ट्वा स्वर्लोकमाप्नुयात् ॥ १४७५ ॥
चित्रकूटमथारुह्य स्वर्गलोके महीयते ।
[2]तीर्थं सप्तऋषं नाम सर्वकामफलप्रदम् ॥ १४७६ ॥
अश्वमेधसहस्रस्य श्रेयः सप्तरुचि सरः ।
श्राद्धं दानं तथा जप्यं स्नानं होमस्तथार्चनम् ॥ १४७७ ॥
सर्वमक्षयतां याति यत्कृतं तत्र पार्थिव ।
भस्त्रापदमथासाद्य रुद्रलोके महीयते ॥ १४७८ ॥
छागलेश्वरमासाद्य काममाप्नोत्यभीप्सितम् ।
रुद्रस्यानुचरो भूत्वा तेनैव सह मोदते ॥ १४७९ ॥
परोष्णीप्रभवं प्राप्य गोसहस्रफलं लभेत् ।
उष्णोदकमथासाद्य विष्णुलोके महीयते ॥ १४८० ॥
क्रमता विष्णुना लोकान् कृतं पादेन तत्सरः ।
क्रमसारमिदं प्रोक्तं तदा विष्णुपदं च तत् ॥ १४८१ ॥
इष्टवान् क्रतुभिस्तत्र यदा देवः पितामहः ।
क्रमसारस्तदा प्रोक्तः सर्वकल्मषनाशनः ॥ १४८२ ॥
वसतिस्तत्र नागस्य कौण्डिण्यस्य यदा तदा ।
कौण्डिण्य सर इत्येव तस्य नाम प्रकीर्तितम् ॥ १४८३ ॥

---

१ Lines 4, 5 not in B. २ Lines 16–20 not in A, B.

तत्र स्नातः समभ्यर्च्य देवताश्च[1] पितॄन् तथा ।
[2]अश्वमेधमवाप्नोति नात्र कार्या विचारणा ॥ १४८४ ॥
दृष्ट्वा तु शिखरान् रम्यान् ब्रह्मविष्णुमहेश्वरान् ।
लोकत्रयमवाप्नोति तेषामेव न संशयः ॥ १४८५ ॥
ब्रह्मणो यागभूमिस्तु[3] दृष्ट्वा तत्र महीपते ।
स्वर्गलोकमवाप्नोति कुलमुद्धरते सुखम् ॥ १४८६ ॥
तत्र क्षीरसरो रम्यं दृष्ट्वा मुच्येत किल्बिषैः ।
सु[4]साराप्रभवं प्राप्य स्नात्वा कृष्णचतुर्दशीम् ॥ १४८७ ॥
सर्वपापविनिर्मुक्तो रुद्रलोके महीयते ।
सन्निकृष्टानि तीर्थानि कथितानि मया तव ॥ १४८८ ॥
सर्वेषां पापहर्तॄणि किं भूयः कथयामि ते ।
[5]ईति श्री नीलमते तीर्थमहिमावर्णनम् ॥

गोनन्द उवाच ।

तीर्थानि द्विजमुख्यानि कश्मीरेषु वदस्व मे ॥ १४८९ ॥
तेषां स्नानेन यत्पुण्यं तपसा दग्धकिल्बिषः ।

बृहदश्व उवाच ।

निःसृता सरसः पुण्यात् क्रमसारान्महानदी ॥ १४९० ॥
[6]कौण्डिण्यनाम्नी या स्नाने पुण्डरीकफलप्रदा ।
तयोः समागमे स्नात्वा गोसहस्रफलं लभेत् ॥ १४९१ ॥
विशोकायां नरः स्नात्वा विशोकः श्रीसमन्वितः ।
पुण्यं फलमवाप्नोति देवसत्रस्य मानवः ॥ १४९२ ॥
कौण्डिणीसह संयोगं यत्र याँति विशोकया ।
तत्र स्नातस्य राजेन्द्र वाजपेयफलं भवेत् ॥ १४९३ ॥
वृद्धतीर्थे नरः स्नात्वा यज्ञमाप्नोति गोसवम् ।
तत्र सन्निहितो नित्यं वासुकिर्भुजगाधिपः ॥ १४९४ ॥
देवलोकमवाप्नोति स्नात्वा देवसरस्यपि ।
अग्नितीर्थे नरः स्नात्वा वन्हिलोकं प्रपद्यते ॥ १४९५ ॥
नदी सरस्वती नाम यस्यां स्नातो दिवं व्रजेत् ।
पूर्वदक्षिणभागे तु स्थिता देवसरस्यथा ॥ १४९६ ॥

---

१ देवताः पितरस्तथा C, D. २ Line 2 not in C, D. ३ श्च A.
४ सुमारा B; ससारा C, D. ५ Line 12 not in A, B. ६—नाम यः स्नाने C, D. ७ वारि A, B. ८ सरस्यपि C, D.

विनतास्वामिपुरतः कद्रूस्वामिसमीपतः ।
तीर्थयोस्तु नरः स्नात्वा गोशतस्य फलं लभेत् ॥ १४९७ ॥
सन्ध्यादेवी नदी पुण्या यस्यां स्नातस्य मानव ।
व्यपैति कल्मषं देहात् स्वर्गलोकं च[1] गच्छति ॥ १४९८ ॥
सन्ध्यापुष्करिणी पुण्या पूर्वतुल्यफलप्रदा ।
अवगाह्य नरो भक्त्या पुण्यां ब्राह्मणकुण्डिकाम् ॥ १४९९ ॥
नीलकुण्डं वितस्ताख्यं शूलघातं तथैव च ।
तीर्थं त्रिनामकं दृष्ट्वा स्वर्गलोके महीयते ॥ १५०० ॥
तथा विनेशनं[2] प्राप्य वाजपेयफलं लभेत् ।
ब्राह्मणकुण्डिकायां[3] च नीलकुण्डे च पार्थिव ॥ १५०१ ॥
अक्षय्यं फलमुद्दिष्टं[4] दानं श्राद्धं तथा तपः ।
वितस्तोन्मज्जने स्नात्वा गोसहस्रफलं लभेत् ॥ १५०२ ॥
पञ्चयज्ञानवाप्नोति स्नात्वैव पञ्चहस्तके ।
प्रत्यहं ये विनिर्दिष्टा गृहस्थस्य महीपते ॥ १५०३ ॥
पुण्यलोकोऽस्त्यसौ नाम सर्वपापहरः परः ।
कापोतके नरः स्नात्वा गोप्रदान फलं लभेत् ॥ १५०४ ॥
विष्णवाश्रमे नृसिंहस्य पुरतः पार्थिवोत्तमः ।
वितस्तोन्मज्जनं पुण्यं तत्र[5] स्नात्वा च भक्तितः ॥ १५०५ ॥
इह कीर्तिमवाप्यासौ विष्णुलोके महीयते ।
स्नातश्च ध्यानधारिण्यां गोसहस्रफलं लभेत् ॥ १५०६ ॥
वितस्ता ध्यानधारिण्योः संगमे पापनाशने ।
पुण्यं फल मवाप्नोति वाजपेयस्य मानवः ॥ १५०७ ॥
वितस्तान्तर्हिता तत्र प्रविश्य ध्यानधारिणीम् ।
अन्तर्हिता मता शीघ्र विशोका यत्रनिम्नगा ॥ १५०८ ॥
धौम्याश्रमे तपो योगे राजसूयफलं लभेत्[6] ।
चतुर्वेदिं नदीं[7] दृष्ट्वा कन्यादानफलं लभेत् ॥ १५०९ ॥
प्राप्य वृषे कथं जन्तुः लभेत् वहु सुवर्णकम् ।
त्रिकोटिप्रभवं प्राप्य मुच्यते सर्वकिल्विषैः ॥ १५१० ॥
प्राप्य चन्द्रवती जन्म चन्द्रलोके महीयते ।
देवतीर्थे नरः स्नात्वा दिव्यः पुत्रोऽपि जायते ॥ १५११ ॥

---

१ स D. २ विनयनं C, D. ३ ब्रह्मण D. ४ सर्वं B, D, C. ५ तत्र......अवाप्यासौ not in C, D. ६ स्मृतं C, D. ७ नरः C, D.

त्रिकोट्यां तु नरः स्नात्वा दिव्यलोके महीयते ।
स्नात्वा वृषपथायां च शक्रलोके महीयते ॥ १५१२ ॥
चन्द्रवत्यां नरः स्नात्वा दशगोदफलं लभेत् ।
नदी ऋषपथा पुण्या तथा चन्द्रवती अपा ॥ १५१३ ॥
संगमे[1] चानयोः प्रोक्तं राजसूयफलं बुधैः ।
त्रिकोटीसंगमाच्चापि[2] यावत् रौप्येश्वरं हरिम् ॥ १५१४ ॥
तावत्[3] क्षेत्रं समं ज्ञेयं वाराणस्यां[4] महीपते ।
रुद्रलोकमवाप्नोति स्नात्वा तु कपटेश्वरे[5] ॥ १५१५ ॥
विश्वलिंगह्रदे स्नात्वा गोप्रदानफलं[6] लभेत् ।
विजयीशाग्रतः स्नात्वा वितस्तायां महीपते ॥ १५१६ ॥
रुद्रलोकमवाप्नोति कुलमुद्धरते सुखम् ।
पिंगलेशाग्रतः विष्णुलोके महीयते ॥ १५१७ ॥
खुण्डपुच्छाश्रमे स्नात्वा फलमेतदुदाहृतम् ।
पुण्डरीके[7]नरः स्नात्वा पुण्डरीकफलं लभेत् ॥ १५१८ ॥
शूर्पारके नरः स्नात्वा गोप्रदानफलं लभेत् ।
वितस्ताध्यान धरिण्योः संगमेऽन्नप्रदो नरः ॥ १५१९ ॥
अक्षयं फलमाप्नोति यावदिन्द्राश्चतुर्दश ।
सर्वेषां[8] चैव तीर्थानां सन्निधानं नराधिप ।
नरसिंहाश्रमे तत्र कृतमप्यपि सत्फलम् ॥ १५२० ॥
वितस्ताध्यान धारिण्योः संगमश्चैव भूपते ।
कल्पषोडशनागस्य[9] यावत् मुत्तमम् ॥ १५२१ ॥
तावत् क्षेत्रं समं पुण्यं प्रयागेण नराधिप ।
गंगोद्भेदेनरः स्नात्वा भेडादेवीसमीपतः ॥ १५२२ ॥
गोस्नानफलं प्राप्य स्वर्गलोके महीयते ।
अवगाह्य कथां पुण्यां दशगोदफलं लभेत् ॥ १५२३ ॥
औजसे[10] धर्मराजस्य स्नात्वा तु पुरतो नरः ।
न दुर्गतिमवाप्नोति वाजपेयफलं लभेत् ॥ १५२४ ॥

---

१ संगमं यत्र तत्रोक्तं राजसूयं मनीषिभिः C, D. २ संगमाद्दृश्य......हरं C, D. ३ तार—D. ४ वाराणस्याः यत्राधिकं C, D. ५ कपटेश्वरीम् D. ६ रुद्रलोके महीयते B. ७ पुण्डरीकं D. ८ सर्वे सन्निहितास्तीर्थाः नरसिंहाश्रमे तदा occuros in C, D for lines 18, 19. ९ कल्मषनाशनागस्य D. १० तेजसे D.

अस्मिन् तीर्थवरे राजन् श्राद्धमानन्त्यमश्नुते ।
मासे चाश्वयुजे कृष्णपंचदश्यां विशेषतः । १५२५ ॥
स्नात्वा नारायणस्थाने विष्णुलोके महीयते ।
रामतीर्थे भवोत्से च फलमेतत् प्रकीर्तितम् ॥ १५२६ ॥
शैलपृष्ठे नरः स्नात्वा तीर्थे वैश्रवणस्य च ।
धनस्य भागी भवति यत्र यत्राभिजायते ॥ १५२७ ॥
तीर्थे चाप्सरसां स्नात्वा भवेच्छ्री[2]मान् नरोत्तमः ।
कामतीर्थे नरः स्नात्वा कामभागभिजायते ॥ १५२८ ॥
ऋषितीर्थे नरः स्नात्वा मुनिवन्निर्मलो भवेत् ।
वैतरण्यां नरः स्नात्वा न दुर्गतिमवाप्नुयात् ॥ १५२९ ॥
ऋषिकुल्यामथासाद्य देवकुल्यां तथैवच ।
अश्वतीर्थं प्र[3]वासं च वारुणं तीर्थमेव च ॥ १५३० ॥
वह्नितीर्थं चन्द्रतीर्थं नागतीर्थं तथैवच ।
चक्रतीर्थं वामनं च गोप्रदानफलं लभेत् ॥ १५३१ ॥
स्नात्वा तु म[4]रुतीर्थे च स्कन्दतीर्थे च मानवः ।
तथा सुरेश्वरीतीर्थे स्वर्गलोके महीयते ॥ १५३२ ॥
[5]माहुरीं तु समासाद्य तिलप्रस्थफलं लभेत् ।
तत्संगमे वितस्तायां स्नात्वा मुच्येत किल्बिषैः ॥ १५३३ ॥
त्रिपुरेशाग्रतः पुण्यां अवगाह्य तु माहुरीम् ।
महादेवगिरिं दृष्ट्वा रुद्रलोके महीयते ॥ १५३४ ॥
अमरेशे नरः स्नात्वा गोशतस्य फलं लभेत् ।
मालिन्यां तु नरः स्नात्वा दशगोदफलं लभेत् ॥ १५३५ ॥
स्नात्वा पाण्डवतीर्थे च पञ्चयज्ञानुपाश्नुते ।
उग्रेशं तीर्थमासाद्य रुद्रलोके महीयते ॥ १५३६ ॥
स्नात्वा रामह्रदे तोये [6]भवेद्बहुसुवर्णभाक् ।
मालिनीसंगमं पुण्यं सिन्धुना सह पार्थिव ॥ १५३७ ॥
तथा [7]रामह्रदो यत्र युज्यते सह सिन्धुना ।
तयोः फलमथोद्दिष्टं राजसूयाश्वमेधयोः ॥ १५३८ ॥
संयोगं सिन्धुना यत्र गता कनकवाहिनी ।

---

१ तस्मिन् C, D. २ श्रीभाक् B, D. ३ प्रवासश्च D. ४ मद C, D.
५ Lines 17–24 not in D. ६ लभेत् D. ७ रामह्रदा F.

गोसहस्रमवाप्नोति धनवानपि जायते ॥ १५३९ ॥
पावना च नदी पुण्या रजोबिन्दुविनिर्मला ।
तस्यां[1] स्नातस्त्ववाप्नोति पुण्डरीकफलं नरः ॥ १५४० ॥
तयोः समागमे पुण्ये राजसूयफलं स्मृतम् ।
तस्माद्देशादथारभ्य यावत्स्याच्चीरमोचनम् ॥ १५४१ ॥
तावत्क्षेत्रं समं पुण्यं वाराणस्यां[2] प्रकीर्तितम् ।
तन्मध्ये सर्वतीर्थानां सान्निध्यं कथितं मया ॥ १५४२ ॥
स्वर्गमार्गप्रदं प्रोक्तं तीर्थं चीरप्रमोचनम् ।
दिवमुत्सृज्य चीराणि यत्र[3] सप्तर्षयो गताः ॥ १५४३ ॥
स्नात्वा तत्र दिवं यान्ति येपि पापकृतो नराः ।
सोदरे तु नरः स्नात्वा गोसहस्रफलं लभेत् ॥ १५४४ ॥
तथा कनकवाहिन्या संगमं याति यो नरः ।
तथा कालोदका पुण्या नदी यत्रैव संगता ॥ १५४५ ॥
तयोः फलं विनिर्दिष्टं राजसूयाश्वमेधयोः
स्नात्वाश्वमेधमाप्नोति वितस्तासिन्धुसंगमे ॥ १५४६ ॥
प्रोष्ठपद्यां विशेषेण एवमाहुर्मनीषिणः ।
पात्रतीर्थे नरः स्नात्वा पुण्डरीकमुपाश्नुते ॥ १५४७ ॥
आपगायां नरः स्नात्वा कुलमुद्धरते स्वकम् ।
अग्निष्टोममवाप्नोति[4] स्नात्वा सरसि मानसे ॥ १५४८ ॥
आषाढ्यां तु विशेषेण नात्र कार्या विचारणा ।
वाजपेयमवाप्नोति महापद्मसरस्यपि ॥ १५४९ ॥
हिरण्या वै नदी पुण्या हरमुण्डाद्विनिर्गता ।
स्नातस्तस्यामवाप्नोति वह्निष्टोमफलं[5] नरः ॥ १५५० ॥
महापद्मसरः पुण्यं हिरण यत्र गच्छति ।
अश्वमेधफलं तत्र पौर्णमास्यां विशेषतः ॥ १५५१ ॥
बहुरूपे नरः स्नात्वा विष्णुलोके महीयते ।
बहुरूपे च कथितं फलमेतन्नरोत्तम ॥ १५५२ ॥
शतशृंगे सुतीर्थे[6] च तीर्थे वैश्रवणस्य च ।
तीर्थे पुण्ये तथा राजन् भूर्जस्वामिसमीपतः ॥ १६५३ ॥

---

१ यस्यां स्नातः C, D. २ वाराणस्यां समं स्मृतं C; वाराणस्याः यवाधिकं D. ३ तत्र C. ४ वह्नि—C, D. ५ ह्यग्नि C, D. ६ च D.

वसूनामथ रुद्राणां साध्यानां महतामपि ।
विशेषं चैव देवानां भृगूनां च नराधिप ॥ १५५४ ॥
तथैवाङ्गिरसं राजन् तीर्थे तीर्थे पृथक् पृथक् ।
दशगोदफलं प्रोक्तं मुनिभिस्तत्त्वदर्शिभिः ॥ १५५५ ॥
[1]पालाशा च शुमाला च वितस्तां यत्र गच्छति ।
गोसहस्रफलं तत्र प्रत्येकं कथितं [2]मुने ॥ १५५६ ॥
नदीकूलारणी यत्र संयुज्येत वितस्तया ।
तत्र स्नात्वा कुलं [3]शीघ्रं पुनीते मानवोत्तमः ॥ १५५७ ॥
विगाह्य पुष्करं तीर्थम[4]तिरात्रफलं लभेत् ।
[5]तीर्थे सप्तऋषीणां च वह्निष्टोमफलं लभेत ॥ १५५८ ॥
तीर्थे वाराहमासाद्य वितस्ताम्भसि मानवः ।
विष्णुलोकमवाप्नोति कुलमुद्धरते स्वकम् ॥ १५५९ ॥
स्नात्वा नारायणस्थाने वितस्ताम्भसि पार्थिव ।
विष्णुलोकमवाप्नोति नरो नास्त्यत्र संशयः ॥ १५६० ॥
नदी [6]गोत्रवती यत्र वितस्तां प्रतिपद्यते ।
तयोः स्नानस्य कथितं गोसहस्रफलं पृथक् ॥ १५६१ ॥
माहुरी [7]च नदी पुण्यां मथुरेव विशेषतः ।
शत[8]शीला [9]च माला च नदी च विमलोदका ॥ १५६२ ॥
[10]राहुला च नदी पुण्या श्रीशाख्या च महानदी ।
द्वितीया च तथा [11]शुद्धा समु[12]ला सरसा तथा ॥ १५६३ ॥
[13]आसां प्रत्येकतः स्नात्वा लभेद्गोदानजं फलं ।
आसामेव तु सर्वासां संगमांश्च पृथक् पृथक् ॥ १५६४ ॥
अवगाह्य नरः शुद्धो दशगोदफलं लभेत् ।
अनन्ततीर्थे स्नातस्तु नागलोके महीयते ॥ १५६५ ॥
बिन्दुनादेश्वरं तीर्थं सोमतीर्थं पृथूदकम् ।
तुङ्गेक्षुकदेशे तीर्थं तु उतंकस्वामिनं [14]तथा ॥ १५६६ ॥
रामतीर्थं भृगुस्तीर्थं तीर्थमाङ्गिरसं तथा ।

---

१ पालामा च शिलासा च C, D. २ पुरा C, D. ३ शीलं A. ४ मतिमात्र D. ५ Line 10 not in A, , D. ६ गोत्रनदी C, D. ७ तु C, D. ८ शतलीला B, D. ९ समाला च D. १० लाहुला D. ११ श्रद्धा D. १२ सपूला B. १३ Line 21 not in D. १४ जलं D.

इष्ट्वैकैकमयो[1] राजन् दशगोदफलं लभेत् ॥ १५६७ ॥
सर्वाः सरिद्वराः पुण्याः सर्वप्रस्रवणास्तथा ।
इमे तथा च राजेन्द्र सर्वे पुण्याः शिलोच्चयाः ॥ १५६८ ॥
सर्वाः ऋषिगताश्चार्चाः सरांसि विपुलानि च ।
सर्वत्रैव महीनाथ कश्मीरेषु विशेषतः ॥ १५६९ ॥
सर्वे च संगमाः पुण्याः नागानां ये जलाशयाः ।
सुवर्णशतदानस्य फलं प्राप्नोत्यसंशयम् ॥ १५७० ॥
इति तीर्थानि पुण्यानि वितस्ता च विशेषतः ।
सर्वत्र पावनी देवी वितस्ता कथिता नृप ॥ १५७१ ॥
तस्यां स्नात्वा दिवं यान्ति येऽपि पापकृतो नराः ।
वह्निष्टोमवाप्नोति स्नातस्तस्यां नराधिप ॥ १५७२ ॥
इष्टाश्रमे वितस्तेयं[2] धूमेशे सिन्धुसंगमे ।
वराहतीर्थे पापघ्नी राजसूयफलप्रदा[3] ॥ १५७३ ॥
सदैव पुण्या शुक्ले च त्रयोदश्यां विशेषतः ।
यत्र यत्र वितस्तायां गोरजोधूतमस्तकः[4] ॥ १५७४ ॥
स्नात्वा त्रयोदशीं शुक्लां मुच्यते सर्वकिल्बिषैः ।
अदृश्यं मानवः कृत्वा पातकं मुक्तपञ्चकम् ॥ १५७५ ॥
स्नानेनैकेन शिशिरे[5] सलिलेन व्यपोहति ।
अनर्काभ्युदिते काले सकलं शिशिरं यदि ॥ १५७६ ॥
[6]अत्र स्नाति नरो राजन् कामानाप्नोत्यभीप्सितम् ।
स्नात्वा यथावद्विधिना समभ्यर्च्य हुताशनम् ॥ १५७७ ॥
ब्राह्मणेभ्यस्तथा दत्वा कृशरं घृतसंयुतम् ।
स्वर्गलोकमवाप्नोति यावदिन्द्राश्चतुर्दश ॥ १५७८ ॥
एवं संवत्सरं पूर्णं नित्यस्नायी नरः[7] शुचिः ।
मोक्षोपायमथासाद्य ततो मोक्षमवाप्स्यति ॥ १५७९ ॥
[8]काश्मीरिकाणां तीर्थानां फलं ते कथितं मया ।
सकलं नीलवाक्यं च गमिष्यामि सुखी भव ॥ १५८० ॥
इदं धार्यं प्रयत्नेन यन्मयाभिहितं तव ।

---

१ मथैतेभ्यः C, D. २ वितस्ताख्ये C, D. ३ —प्रदे D. ४ गजदूत C, D. ५ शिशिरे......काले not in D. ६ तत्र स्नातो C, D. ७ नराधिप C, D. ८ कश्मीरकाणां D.

श्रुत्वैतत्फलमाप्नोति दशगोदानजं नरः ॥ १५८१ ॥
वैशम्पायन उवाच ।
एवमुक्त्वा स गोनन्दं बृहदश्वो महीपतिम् ।
धर्मात्मा तीर्थयात्रार्थं जगामाभीप्सितां गतिम् ॥ १५८२ ॥
बहु मेने स चात्मानं गोनन्दः समरप्रियः ।
[1]प्रशशास धरां सम्यक् राजा धर्मानुसारतः ॥ १५८३ ॥
जनमेजय उवाच ॥
भूयो वितस्तामाहात्म्यं कथयस्व द्विजोत्तम ।
[2]यच्छ्रुत्वैव भविष्यामि द्विजेन्द्र गतकल्मषः ॥ १५८४ ॥
वैशम्पायन उवाच ।
हरस्य दयिता भार्या सती दाक्षायणी शुभा ।
सैवोमा कथिता राजन् प्राप्ते वैवस्वतेऽन्तरे ॥ १५८५ ॥
हिमाद्रितनया सैव यमुना पापनाशिनी ।
मन्वन्तरान्ते सैवोक्ता नौर्गरिष्ठा जगत्त्रये ॥ १५८६ ॥
कश्मीरा कथिता देवी वितस्ता सैव निम्नगा ।
पातालादुत्थिता देवी शूलखातात्तरङ्गिणी ॥ १५८७ ॥
स्नातस्य तोये वैतस्ते स्वयमात्मानमात्मना ।
विजानाति गताशेषकल्मषाल्लघुभागिनम् ॥ १५८८ ॥
वि[3]तस्ताया महीनाथ न गंगा व्यतिरिच्यते ।
केवलं जान्हवीतोये पुरुषस्यास्थिसं[4]भवः ॥ १५८९ ॥
वितस्तातोऽधि[5]को राजन् स्नानाद्यं तुल्यमेवच ।
भगीरथेन गंगेयं पुरा राज्ञाऽवतारिता ॥ १५९० ॥
अस्थ्याप्लावनकामेन सगराणां महात्मनाम् ।
तेनेयं कथिता राजन् प्रशस्ता तत्र कर्मणि ॥ १५९१ ॥
वितस्ता वै नदी पुण्या सर्वपापहरा शुभा ।
वैतस्तयेन तोयेन जठरस्थेन ये मृताः ॥ १५९२ ॥
सर्वे स्वर्गमनुप्राप्ताः यथा ते सोमपायिनः ।
तीर्थं वाराहमासाद्य वितस्ताम्भसि मानवः ॥ १५९३ ॥
[6]विष्णुलोकमवाप्नोति कुलमुद्धरते स्वकम् ।

---

१ Line 6 not in A, B. २ तच्छ्रुत्वैव गमिष्यामि C, D. ३ वितस्तात: D. ४—क्षेपणं D. ५—धिकं D. ६ Lines 29 to 3rd. of page 128 not in C, D.

स्नात्वा नारायणस्थाने वितस्ताम्भसि पार्थिव ॥ १५९४ ॥
देवलोकानवाप्नोति नरो नास्त्यत्र संशयः ।
न यज्ञैर्दक्षिणावद्भिस्तर्पिता देवतास्तथा ॥ १५९५ ॥
तृप्तिं समधिगच्छन्ति [1]यथा तत्सलिलैः शुभैः ।
पात्रे तीर्थे [2]तथा काले मिष्टान्नैः विविधैः कृतैः ॥ १५९६ ॥
यथा तृप्यन्ति पितरः [3]श्राद्धैस्तद्वच्च तैर्जलैः ।
नागैः बहुविधाकारैः सुहृद्भिः [4]संगतिं गताम् ॥ १५९७ ॥
तीर्थैः देवैश्च ऋषिभिः गन्धर्वैर्यक्षराक्षसैः ।
[5]अभिगच्छेत मेधावी जन्मसाफल्यकारणात् ॥ १५९८ ॥
स्नातमात्रो वितस्तायां जानाति वरुणो नरम् ।
जलाधिपेन ज्ञातस्य नरके पतनं कुतः ॥ १५९९ ॥
[6]पापिनां नरके घोरे पततां दुष्टात्मनाम् ।
हस्तत्राणपदा देवी वितस्ताघनिषूदिनी ॥ १६०० ॥
स्वर्गारोहणनिःश्रेणीं मनोरथफलप्रदाम् ।
वितस्तां ये गमिष्यन्ति ते यास्यन्त्यमरावतीम् ॥ १६०१ ॥
हंससारसयुक्तेन चक्रवाकोपशोभिना ।
विमानेनार्कवर्णेन किंकिणीजालमालिना ॥ १६०२ ॥
देवरामागणाढ्येन वीणामुरजनादिना ।
पुलिनैर्विविधैर्युक्तां पद्मोत्पलविभूषिताम् ॥ १६०३ ॥
गोकुलारावबहुलां [7]हम्भारव निनादिताम् ।
मत्स्यकच्छपसंबाधां सतीर्थ्यां कामदायिनीम् ॥ १६०४ ॥
अमृतस्वादसलिलां नृणां दृष्टिम् मनोहराम् ।
येऽभिगच्छन्ति वरदां [8]मातरं वा सुखप्रदाम् ॥ १६०५ ॥
तेऽभिगच्छन्ति राजेन्द्र प्रतिष्ठां भुवि मानवाः ।
समुद्ररूपस्य हरस्य भार्यां हिमालयस्याद्रिपतेस्तनूजाम् ।
सुसारतोयां ऋषिवर्यजुष्टां तां त्वं पवित्रां प्रणमस्व राजन् ॥१६०६
सिन्धुस्त्रिकोटी च तथा विशोका पुण्या नदी हर्षपथा शिवा च ।
पुण्या सुखा चन्द्रवती सुगन्धा पुण्योदका किल्विषनाशिनी च ॥१६०७

---

१ यथैतत D. २ यथाकालं C, D. ३ शुद्धैः शीतैर्जलैः C, D. ४ सततं गतं C, D. ५ अति—A, D. ६ पापानां C. ७ हस्ताराव C, D. ८ मातेव वरदां देवीं C, D.

कुलारणी पापहरा च कृष्णा नदी सुपुण्या मधुमत्यथापि ।
नदी परुष्णी च तथा त्रिपुण्या पुष्णाति पुण्यां वरदां वितस्ताम् ।
तीर्थानि पुण्यानि सरांसि राजन् नद्यस्तडाकाः विविधाश्च कूपाः
आयान्ति सर्वे वरदां वितस्तां त्रयोदशीं भाद्रपदस्य शुक्लाम् ।
कस्यास्ति शक्तिर्नृपते प्रवक्तुं देवीगुणान् वर्षशतैरनेकैः ।
भक्त्या मयोक्तं च निशम्य कांचित् भक्तिं कुरुष्वात्र सदा नृवीर ।
श्रुत्वा वितस्तामाहात्म्यं मुच्यते सर्वकिल्बिषैः ।
श्रुत्वा नीलमतं सर्वं दशधेनुफलं लभेत् ॥१६११॥
इत्येवमुक्तं जनमेजयस्य व्यासस्य शिष्येण महाव्रतेन ।
संक्षेपतो ग्रन्थबहुत्वभीत्या समग्रशास्त्रैः खलु सूचितं यत् ।
सर्वत्र नैतद्ध्युपयोगमेति ततो नचोचे भगवान् महात्मा ।
अतीव हृद्ये बहुविस्तरेऽपि जनप्रिये भारतपूर्णचन्द्रे ॥१६१२॥

इति नीलमते वितस्तामाहात्म्यम् ।

समाप्तं चेदं नीलमतपुराणम् ॥ शिवायास्तु लेखकपाठक-श्रावकाणाम् ॥

संवत् ४९८९ ॥ श्रावणे त्रयोदश्याम् ॥

---

१ कुल्या—C, D. २ प्रयान्ति B, C. ३ भारती वै C, D. ४ विषयोपयोग्यं C, D. ५ तदा न चक्रे C, D.



*

# Corrigenda and Addenda.

| श्लोकसंख्या | शुद्धिः | अशुद्धिः |
|---|---|---|
| १ | श्रै | श्यै |
| २१ (notes) | सौ र्यां | सोर्यां |
| ४६ | र्ध्यादि | ध्र्यादि |
| ५४ | तु | त्तु |
| ७८ | वि | बि |
| ,, | र्ह | र्ह |
| ८४ | न्त्या | न्स्या |
| ८५ | add after स्यामि, "तथाभूतौ च किं मम" | |
| ८७ | भूत्वाऽसिता | भूत्वा सिता |
| ८६ | तुरग | तुग |
| ६१ | हरण | हृण |
| ६४ | वैरं | वरं |
| ६५ | च्छेश | च्छेष |
| ,, | डाह | जाह |
| २०१ | यातेऽस्मिन् | यात्यस्मिन् |
| २०३ | सुताः | सुतः |
| २२४ | स्तब्धे—This is different reading for ध्वस्ते. (R. S.) | |
| २३२ | दक्षिणेऽस्य for दक्षिणे च | |
| २३७ | पादोने | पादेन |
| २३६ | स्वस्वाश्रमान् | स्वस्याश्रमं |
| ,, | °णि | °नि |
| २४१ | र्यावु | र्या व |
| २५१ | ति | सि |
| २५२ | शौ तौ | शैस्तौ |

| श्लोकसंख्या | शुद्धिः | अशुद्धिः |
|---|---|---|
| २५६ | शिर° | सर° |
| २६२ | द्वयं | द्वयह् |
| २७० | गरुडात्त° | गरुडस्त |
| २७६ | चारु | चारू |
| २७८ | पति° | पते |
| २८१ | येऽधिकाः | योधिकाः |
| ,, | दशकान् ना° | °का ना° |
| २८४ | न्येनेह Diff. read. न्येनेति (R.S.) | |
| २६३ | ततः | ततो |
| २६८ | नागेन्द्रः | °र्गन्द्र |
| ३०० | प्रधानेन | °धान्येन |
| ३०३ | देशो | देशे |
| ३१२ | गाः | गा |
| ३२४ | धत्स्व | ध्वत्सु |
| ३२७ | तं | सं |
| ३२८ | तः | तो |
| ३४२ | व्यपीपवत् | व्यपीपिवत् |
| ३४४ | प्यायन् | प्ययं |
| ,, | जनाः | जनः |
| ३७१ | शंकरीशि | °रेशि |
| ३७२ | °तास्त्वद° | °तस्त्व° |
| ३७६ | पावय तोयेन | °यतु येन |
| ३७८ | देव्यै | दिव्यै |
| ३८० | आखोर्बि° | आखुर्बि° |
| ३८५ | कश्मीराः | °रा |
| ३६१ | सजया | सज° |
| ३६३ | व्य | वि |

| श्लोकसंख्या | शुद्धिः | अशुद्धिः |
|---|---|---|
| ३९४ | °षनाशि° | °पना |
| ४०३ | कुपितां तामथाभ्येत्य–dif. red. for 'कोपितां तामथावेद्य.' (R. S.) | |
| ४०६ | त्वय्यर्पित | तैरर्पित |
| ४११ | मीं | मी |
| ४१६ | °मानेहि | °मानेह |
| ४२१ | माद्राणां Diff.rea. | मात्राणां |
| ४२८ | काल्यमानः | कल्यमानाः |
| ४४१ | उदैरिरत् Dif.read. उदैरयत् (R.S.) | |
| ४४२ | य | ल |
| ४४३ | ष्मा | स्मा |
| ४४४ | नेद्यसेऽश्वा Dif.read. नेद्यसेत्व (R. S.) | |
| ४४७ | भूमेः | भूमी |
| | Also drop the mark (?) | |
| ५०२ | भों | भौ |
| ५३२ | स्ततो | ततो |
| ५४२ | सो | से |
| ५५३ | श्रि | श्वि |
| ५६० | ती | तो |
| ५९८ | ना | ' न |
| ५७३ | सीं | सी |
| ५७६ | पूर्णमास्यो | °मास्या |
| ५९३ | मन्त्रैर्य° | मन्त्रर्य |
| ,, | द्विज | द्विजः |
| ५९५ | द्विजोत्तमान् | °त्तम |
| ६०२ | तिलैर्दत्त्वा | तिले दत्त्वा |
| ६३४ | राजन् | देव (?) |
| ६५२ | तां | तं |
| ६५८ | जा | ज्या |
| ,, | भिः | भि |

| श्लोकसंख्या | शुद्धिः | अशुद्धिः |
|---|---|---|
| ६७३ | द्वारेणादौ | द्वारेण द्वौ(?) |
| ६७५ | महद्रु | मद्रु |
| ६९५ | नां | ना |
| ७१० | तथेला भूतनामकः—-Diff. reading for 'वर्षश्चैव इलाभृतः' (R.S | |
| ७२५ | विनायकाः | विनायकः (?) |
| ७३६ | तें | ते |
| ७४२ | द्युतिर्वसुरथो दश्यो / वामः कामजयौ विराट्—correct reading for '(?) दितिर्वसुरथो दशुवास etc.' (R.S | |
| ७४६ | नाग° | नग° |
| ७५६ | चा | चो |
| ७६० | म | स |
| ७६३ | Insert च after °ताची | |
| ७६४ | मानुष्ये | मानसे (?) |
| ७६५ | कृत्वोपासां | (?) क्रतूपा° |
| ७८५ | °प्यानेक | °प्यने° |
| ,, | भक्ष्यक | भक्तक |
| ७८६ | गेयं | ज्ञेयं |
| ८१५ | मघा | मया |
| ८२६ | यात् | पात् |
| ८२७ | द्दि | द्वि |
| ८२९ | कुल्माषेण चभूरिणा corret reading for—"कल्माषैनंच भू°" (R. S.) | |
| ८३० | सुमधु | मधु |
| ८३३ | स्वाति | साति |
| ८३७ | धराम् | धरम् |
| ८३८ | cor. readings म्बरयुगच्छन्नां, रूपां, and भुजाम् (R.S. | |

| श्लोकसंख्या | शुद्धिः | अशुद्धिः |
|---|---|---|
| ८४२ | पंडितः | चंडितः |
| ८७० | गा | ग |
| ८९७ | पू | पु |
| ८९८ | का | का |
| ८९९ | प्रीतं | प्रीत्यं |
| ९१७ | द्या | द्य |
| ९३८ | "संवत्सरं तु त्यागेन फल-स्यैकस्य कश्यप"—One Line more in the ms. of R. S. | |
| ९४३ | उच्चैःश्रवसः | उच्चैश्रवसः |
| ९४४ | स्यय० | स्स्य |
| ९४६ | र्वा | वा |
| ९५० | ली | ले |
| ९५५ | गे | ग |
| ९६० | ऽथवेतरे | ऽयवोत्तरे |
| ९६३ | वाटो यश्च सुशोभनः—correct reading for, "वाटे जश्च शोभनः" | |
| ९६५ | वीं | वी |
| ९७० | तिषोक्त for तिः शक्ति | |
| ९७७ | च्यं | षं |
| ९८५ | Insert after राजा—"ज्ञातः पुनः" | |
| ९८६ | तोर्ध्वं० | तोर्धं० |
| ९८७ | शक्रस्थानमृदा चैव—correct reading for "शत्रोःस्थानं(श्रोत्रस्थानं)" | |
| ९९० | द्भिः | द्भि |
| ९९१ | घातस्था० | गतान् स्था० |

| श्लोकसंख्या | शुद्धिः | अशुद्धिः |
|---|---|---|
| ९९९ | थौ | थो |
| १००७ | निरतास्तस्मात् | ०रतस्त० |
| १००९ | ला | ल |
| १०११ | दण्डोऽपरा० | दण्डापरा० |
| १०२४ | शौ | शै |
| १०३४ | महाश्च | महान् (?) |
| १०४८ | करोत्य | करोति |
| १०४९ | After this there are found the following lines in the Ms. of Raja Sahib :— | |

श्रुत्वा स्वकीयमाचारं किमपृच्छदतः परम्
वैशम्पायन उवाच ।
कश्मीरकस्तु गोनन्दो वृहदश्वेन भाषितम्

| | | |
|---|---|---|
| ११०८ | मा | मामा |
| १११२ | ग | गः |
| १११५ | ताः | तः |
| १११९ | एवं | एंव |
| ११२० | वा | भा |
| ११२३ | नराधिपात् | ०धिप (?) |
| ११२९ | तस्था | तं स्था |
| ११३१ | नागैर्ना० | नागेना० |
| ११३४ | स | सा |
| ११३५ | ष्ठ | ष्ठ |
| ११३७ | च्चाभयं | च्चभयं |
| ११४१ | Drop नापि | |
| ११५३ | र्णो | र्णी |
| ११५५ | रं | रे |
| ११६४ | हे | ह |
| ११७४ | दृष्टा ह्येते महाबलाः—Correct reading for "दृष्टा ह्य" | |

| श्लोकसंख्या | शुद्धिः | अशुद्धिः |
|---|---|---|
| ११७५ | Fill up "राजश्च" after देवं. | |
| ११७७ | Fill up "स्नात्वा, दृष्ट्वैव" before भवनं. | |
| १२०३ | श्वरे | श्वरः (?) |
| १२०८ | फिन्त्व० | किन्व० |
| १२१२,१३,१४, | ०म्येण | ०म्येन |
| १२१६ | लादो | लदे |
| १२२० | Read शरीरेण after तदा | |
| १२२१ | न्यता | निता |
| १२२६ | नाम | नर्म |
| १२२८ | भृ | मृ |
| १२३० | ज्ञ | रा |
| १२३३ | र्वी | वीं |
| १२३६ | क्त | क्ता |
| १२४२ | तो | ता |
| १२५० | ०नोऽनुगृ० | नोनगृ० |
| १२६१ | लो | को |
| | न्यंने | न्यं नै |
| १२६८ | त्वः | त्वः |
| १२७० | वदीरेवं | वदेदेवं |
| १२७४ | तः | ता |
| १२८० | र्तिः | तिः |
| १२६७ | स | तं |
| १२६६ | ऽन्वीयमानेन | नयमानेन |
| १२१० | त्यम | त्यं म |
| १३३० | रक्री | रःकी |
| १३३१ | तीरे | तैरै |
| १३३५ | दृच | दच |
| १३३६ | after भुवने read जलमरणवपि | |
| १३४७ | गौरपाराशर | मोरपाराशर |
| १३५१ | द्द्वि | द्वि |
| १४०८ | णा | ण |
| १४२२ | से | सि |
| १४२७ | केया | केषा |
| १४२७ | ता | तो |
| १४३० | Drop 'क' | |
| १४३५ | च्येत | च्यते |
| १४३६ | त्त्वा | त्वा |
| १४४७ | च्येत | च्यते |
| १४५५ | गोद | गोध |
| १४६६ | थ | था |
| १५०३ | य | थ |
| १५०८ | ग | म |
| १५१० | हर्षपथं | दृशे फथं |
| १५१२ | हर्ष | वृष |
| १५१३ | ह | क्त |
| १५१४ | योः | पोः |
| १५१७ | Insert स्नात्वा after प्रतः | |
| १५१६ | र्पा | र्पी |
| १५२२ | ग | णा |
| १५५१ | णी | ण |
| १५६२ | राया | रायां |
| १५६२ | स्तेये | स्तय |
| १६०५ | म | मृ म |

श्री नीलमतपुराणान्तर्गत-

# श्लोकानामकारादिक्रमेण सूची ।

## द

# APPENDIX A.

## The rites and observances ordained by Nīla for Kashmirians.

### 1. THE FULL MOON DAY OF ASŪJ:—

This tithi has been dedicated to the worship of Nikumbha. It is supposed that the ghosts, the followers of Nikumbha enter the bodies of men on this day and leave them the next day. This day is also observed as the festival of Kaumudi (moon). An image of Kaumudi is made and to this the worship is offered. Excepting the canvalescent and childron, all adults have to undergo a fast which is broken just as the moon becomes visible. Fire is lit and the offerings are made to it in the name of Rudrā, Chandra, Umā, Skanda, Nāsatyas and Naṇdin. A strictly vegetarian diet is to be taken and the night to be passed in front of the Sacred Fire. Early in the next morning the devotees are at liberty to sing, dance and play and even to use vulgar language and sprinkle muddy water upon their fellow-men for they are supposed to be possessed by the ghosts.

It is also enjoined that the people should keep on the fire lit for the wintry six months, and for the month of Kārtika, place an oil-lamp outside their houses during the nights.

*N. B.*—Placing of an oil-lamp outside houses during the month of Kārtika is still in vogue in Kashmir.

